ri Balamanorama Series No. 15.

॥ श्रीः ॥

# कृष्णयजुर्वेदीयसंध्यावन्दनम्

## सभाष्यम्

SANDHYĀVANDANA
With the Bhashya of
Vedanti Sitarama Sastri

EDITED BY
Dewan Bahadur T. R. Ramachandra Iyer
and C. Sankara Rama Sastri,
Advocates, Mylapore, Madras.

PRINTED AND PUBLISHED BY
THE SRI BALAMANORAMA PRESS,
MYLAPORE, MADRAS.



Price Annas 8 ] 1931 [ Postage Extra




## गायत्री

बालार्कारुणशोणपाटलमुखैर्युक्तां कुमारीं गिरं
प्रातर्लोहितविग्रहां भुवि गतां सौख्यात्मिकां राजसीम् ।
बिभ्राणामभयं कमण्डलुमथाम्भोजाक्षमालां स्रुवं
गायत्रीं हृदि हंसगां भवकरीं श्रीब्रह्मरूपां भजे ॥

## सावित्री

मुक्तापाण्डुरहेमधूसरसितास्यां त्रीक्षणां व्योमगां
मध्याह्ने सितविग्रहां सुयुवतीं सत्यात्मिकां तामसीम् ।
खट्वाङ्गाभयशूलकानि दधतीं रुद्राक्षमालामुमां
सावित्रीं वृषवाहनां क्षयकरीं श्रीरुद्ररूपां भजे ॥

## सरस्वती

नीलेन्दीवरमेचकैकवदनां वृद्धस्वरूपां रमां
सायं श्यामळविग्रहां दिवि गतां ज्ञानात्मिकां सात्त्विकीम् ।
शङ्खं चक्रमथाभयं च तुलसीमालां करैर्बिभ्रतीं
तार्क्ष्यस्थां च सरस्वतीं स्थितिकरीं श्रीविष्णुरूपां भजे ॥

## सन्ध्या

श्वेतश्यामललोहितैस्त्रिवदनैर्युक्तां त्रिमूर्त्यात्मना
गायत्र्यक्षरमालिकाविलसदग्न्यर्केन्दुतेजोमयीम् ।
सत्यज्ञानसुखात्मिकां समगुणां सन्ध्यां त्रयीमातरं
ओङ्कारात्मकतत्त्वपीठनिलयां श्रीलिङ्गरूपां भजे ॥

## समष्टिगायत्री

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैः
युक्तामिन्दुकलानिबद्धमकुटां तत्त्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गदां
शङ्खं चक्रमथारविन्दयुगळं हस्तैर्वहन्तीं भजे ॥

## PREFACE

SANDHYĀVANDANAM is a Nitya-karma, i.e., a *karma* the performance of which is meritorious, and the non-performance of which is sinful. The first thing that a Dvija has to do after he leaves his bed in the morning before day-break is to answer the calls of nature, clean his teeth and bathe in the orthodox fashion, and, after wearing dry clothes, to put on his Puṇḍra or caste-mark. The next thing is the performance of the Sandhyāvandanam, the importance of which cannot be over-rated. After the night's sleep the mind is perfectly clear, and it is only right and proper that the first impressions that the mind receives should be such as will elevate a man intellectually, morally and spiritually. The Sandhyāvandana is ordained by the Śruti or Vedas. In the second Praśna of Taittirīya Āraṇyaka, the wearing of Yajñopavīta, the Arghya Pradāna or the throwing up of the holy water in the morning, the noon and the evening, and the Dhyāna or the meditation of Paramātman are specially enjoined by

certain texts. The performance of the Sandhyāvandana ending with the Dhyāna is declared by the texts to be productive of the highest happiness or bliss. उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते. The Sandhyāvandana consists of five essential parts :

(1) Prokshaṇa or the sprinkling of water accompanied by a recitation of appropriate Mantras.

(2) Prāśana or the taking in of water consecrated by Mantras.

(3) The Arghya pradāna or the throwing up of water sanctifiied by a repetition of the Gāyatrī. एतानि रक्षांसि गायत्र्याभिमन्त्रितेनाम्भसा शाम्यन्ति. गायत्रियाभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति. ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति.

(4) The Pradakshiṇa. यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधून्वन्ति.

(5) The Dhyāna or the meditation of Parabrahman which consists in identifying the Jīvātman or the self with the Paramātman. असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद.

Of these the first two are intended to purify the body externally and internally so as to qualify the doer to perform the last



three. It is necessary to explain at this stage that the texts quoted above state that the Rākshasas or Asuras who obstruct the path of the Sun are forcibly removed and thrown into the island called Mandehāruṇa by the Arghya or the throwing up of the holy water. What is really meant is that the Sun, the fountain of light represents Jñāna or true knowledge, the Asuras represent the Āsura guṇas, viz., Kāma and Krodha, low desires and anger, which effectively prevent the attainment of Jñāna which leads to Moksha, the highest bliss and the Paramapurushārtha. In the second chapter of the Bhagavad Gītā, in answer to Arjuna's questions, Lord Śrī Krishna declares आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा. The Nityavāiri spoken of here is Kāma and Krodha which are treated as one : काम एष क्रोध एष रजोगुणसमुद्भवः. Unless we conquer our desires, Jñāna is impossible. The idea is tersely put by Lord Śrī Krishna at the end of the chapter—जहि शत्रुं महाबाहो कामरूपं दुरासदम्. The word Mandeha in Mandehāruṇa refers to low desires which are metaphorically spoken of as Rākshasas.

The next step after Sandhyāvandana is the Japa which is considered to be an Yajña

and the highest Yajña. Lord Śrī Krishṇa declares: यज्ञानां जपयज्ञोऽस्मि. Manu says :—

जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥.

*(Manu II—87)*

"By Japa alone a Brahmin will undoubtedly attain bliss. It is immaterial if he performs or omits to perform other sacred rites. Such a Brahmin is the real friend (of the world).' The question is what is meant by Japa. It is the repetition of a Mantra accompanied by a meditation of the Devatā invoked by it. In order that the repetition of a Mantra may be effective and confer spiritual benefit, one has to be initiated into it by a competent Guru. The object of the ceremony called the Upanayana is the imparting of instruction in the Gāyatrī by the Guru to the pupil. Gāyatrī is declared to be the highest Mantra. न गायत्र्याः परो मन्त्रः. The importance of the Gāyatrī consists in its being the essence of the three Vedas—Ṛk, Yajus and Sāman. Manu gives the origin of the Gāyatrī in the following verse :—

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी पितामहः ॥

*(Manu II—77)*



"Brahmā, the Supreme being, drew out (milked) each one of the Pādas of this Sāvitrī, the Ṛk beginning with तत्, from each one of the three Vedas.' It therefore follows that a repetition of the Gāyatrī is in effect tantamount to a recitation of the three Vedas. It is not the Gāyatrī alone that is repeated in the Japa, but Praṇava, Vyāhṛti and Gāyatrī in order. The order also indicates the order of precedence. The first step in the Japa is the Āsana or the posture regulated by Śāstras. The next is Prāṇāyāma, a very important step, as it purifies and strengthens the body and its chief organs, especially the lungs, the heart and the brain, which are called the tripod of life. Prāṇāyāma consists in inhaling pure air through the left nostril, the retention of it by closing both nostrils for a definite time and the exhaling of the same through the right nostril. This is one Prāṇāyāma. And if the process is reversed by inhaling the breath through the right nostril and exhaling through the left after retention for a definite time, it will be another Prāṇāyāma. The Yogaśāstra prescribes 320 Prāṇāyāmas for a day to be done in four instalments. The retention of the breath is the most important part of the

Prāṇāyāma. The time occupied in mentally repeating three times the Mantra which begins with ओं भूः is the time for retention of the breath.

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

The inhaling is called Pūraka, the retention Kumbhaka, and the exhaling Rechaka. It is much to be regretted that the Prāṇāyāma is neglected even by most of the orthodox Brahmins. Then comes the Japa proper. Every Mantra has a Rishi (ऋषयो मन्त्रद्रष्टारः) or a Drashta, literally, a seer whose experience makes him the highest authority on the efficacy of the Mantra. Then it has a Chandas or metre, then the Devatā or the Deity invoked by the Mantra. If the Gāyatrī is repeated in the manner prescribed, it is productive of the highest bliss.

The Sandhyāvandanabhāshya which is now published will enable any one who studies it carefully to realise the supreme importance of the Sandhyāvandana and the Japa. The author is Sitarama Sastri of Mayavaram, an erudite Pandit and Vedāntin who seems to have retired to Benares and written this Bhāshya. Brahmasri Svetaranyam Narayana



Sastri brought a manuscript copy of the Bhāshya when he returned from Benares forty years ago, and I took a copy of it. I showed this Bhāshya to several Pandits, and all of them agreed in pronouncing it to be an excellent one. Brahmasri Veppattur Sitarama Sastri and Mr. C. Sankara Rama Sastri, Advocate, Mylapore, Madras carefully examined the manuscript and made the necessary verbal corrections. My thanks are due to those gentlemen for the great trouble they took. Mr. C. Sankara Rama Sastri who has undertaken the publication of this work has done the editing work which has been a labour of love, and I feel highly grateful to him for the same. My object in publishing the Sandhyāvandanabhāshya is to provide orthodox Brahmins with facilities for understanding the significance of the Sandhyāvandana and the Japa and the meaning of the various Mantras.

T. R. Ramachandra Iyer.

Mylapore, Madras.
15th December, 1930.

# ॥ कृष्णयजुर्वेदीयसंध्यावन्दनम् ॥

आचमनम्—ओम् अच्युताय नमः। अनन्ताय नमः। गोविन्दाय नमः। केशव नारायण माधव गोविन्द विष्णो मधुसूदन त्रिविक्रम वामन श्रीधर हृषीकेश पद्मनाभ दामोदर ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

प्राणायामः—ओं भूः। ओं भुवः। ओँ सुवः। ओं महः। ओं जनः। ओं तपः। ओँ सत्यम्। ओं तत्सवितुर्वरेण्यम्। भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् ॥

संकल्पः—ममोपात्तसमस्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं—(प्रातः)—प्रातःसंध्यामुपासिष्ये।
मध्याह्ने—माध्याह्निकं करिष्ये।
सायंकाले—सायंसंध्यामुपासिष्ये।

प्रोक्षणम्—ॐ श्रीकेशवाय नमः। आपो हि ष्ठा मयोभुवः। ता न ऊर्जे दधातन। महे रणाय चक्षसे। यो वः शिवतमो रसः। तस्य भाजयतेह नः। उशतीरिव मातरः। तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥ ओं भूर्भुवः सुवः ॥

अपां प्राशनम्—(प्रातःकाले)—सूर्यश्च मा मन्युश्च मन्यु-

पतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यद्रात्रिया पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रिस्तदवलुम्पतु । यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥

मध्याह्ने—आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहँ स्वाहा ॥

सायंकाले—अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा ॥

आचमनम् ॥

प्रोक्षणम्— दधिक्राव्णो अकारिषम् । जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत् । प्रण आयूँषि तारिषत् । आपो हि ष्ठा मयोभुवः । ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । ओं भूर्भुवः सुवः ॥

अर्घ्यप्रदानम्—ओं भूर्भुवस्सुवः । तत्सवितुर्वरेण्यं भर्गो



देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

प्रातः त्रिः (३). मध्याह्ने सकृत् (१). सायं त्रिः (३).

प्राणायामः ।

कालातीतप्रायश्चित्तार्घ्यप्रदानम्— ओं भूर्भुवस्सुवः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

आत्मप्रदक्षिणं परिषेचनं च—ओं भूर्भुवः सुवः ॥

ध्यानम्—असावादित्यो ब्रह्म । ब्रह्मैवाहमस्मि ।

आचमनम् ।

तर्पणम्—आदित्यं तर्पयामि, सोमं तर्पयामि, अङ्गारकं तर्पयामि, बुधं तर्पयामि, बृहस्पतिं तर्पयामि, शुक्रं तर्पयामि, शनैश्चरं तर्पयामि, राहुं तर्पयामि, केतुं तर्पयामि, केशवं तर्पयामि, नारायणं तर्पयामि, माधवं तर्पयामि, गोविन्दं तर्पयामि, विष्णुं तर्पयामि, मधुसूदनं तर्पयामि, त्रिविक्रमं तर्पयामि, वामनं तर्पयामि, श्रीधरं तर्पयामि, हृषीकेशं तर्पयामि, पद्मनाभं तर्पयामि, दामोदरं तर्पयामि । आचमनम् । ब्रह्मार्पणमस्तु ॥

## ॥ जपविधिः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

प्राणायामः—ओं भूः+भूर्भुवस्सुवरोम् ॥

संकल्पः—ममोपात्तसमस्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं (प्रातः)—प्रातस्सन्ध्यागायत्रीमहामन्त्रजपं करिष्ये ।

मध्याह्नकाले—माध्याह्निकगायत्रीमहामन्त्रजपं करिष्ये ।

सायङ्काले—सायंसन्ध्यागायत्रीमहामन्त्रजपं करिष्ये ।

प्रणवस्य ऋषिर्ब्रह्म, देवीगायत्री छन्दः, परमात्मा देवता । भूरादिसप्तव्याहृतीनाम् अत्रिभृगुकुत्सवसिष्ठगौतमकाश्यपाङ्गिरस ऋषयः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । अग्निवाय्वर्कवागीशवरुणेन्द्रविश्वेदेवा देवताः ।

ततः दश (१०) प्राणायामान् कुर्यात् ।

आयात्वित्यनुवाकस्य वामदेव ऋषिः । अनुष्टुप्छन्दः । गायत्री देवता । आयातु वरदा देवी अक्षरं ब्रह्मसंमितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व नः ॥ ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुस्सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि ।

सावित्र्या ऋषिर्विश्वामित्रः, । निचृद्गायत्री छन्दः । सविता देवता ॥ ओं । भूर्भुवस्सुवः । तत्सवितुर्वरेण्यम् । भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ प्रातःकाले अष्टोत्तरशतं (१०८). मध्याह्ने चतुष्षष्टिः (६४). सायङ्काले द्वात्रिंशत् (३२) ।

प्राणायामः— ओं भूः+भूर्भुवस्सुवरोम् ।

प्रातःकाले—प्रातस्सन्ध्योपस्थानं करिष्ये ॥ उत्तमे शिखरे देवी भूम्यां पर्वतमूर्धनि । ब्राह्मणेभ्योऽभ्यनुज्ञानं गच्छ देवि यथासुखम् ॥ ॐ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । सत्यं चित्रश्रवस्तमम् ॥ मित्रो जनान्



यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाऽभिचष्टे सत्याय हव्यं घृतवद्विधेम ॥ प्रस मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमꣳहो अश्नोत्यन्तितो न दूरात् ॥

मध्याह्ने—आदित्योपस्थानं करिष्ये ॥ उत्तमे शिखरे देवी भूम्यां ++ देवि यथासुखम् ॥ आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् ॥ उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावा पृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदश्शतं जीवेम शरदश्शतं नन्दाम शरदश्शतं मोदाम शरदश्शतं भवाम शरदश्शतꣳ शृणवाम शरदश्शतं प्रब्रवाम शरदश्शतमजीतास्स्याम शरदश्शतं ज्योक्च सूर्यं दृशे । य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्यात्स मा वृषभो लोहिता-

क्षस्सूर्यो विपश्चिन्मनसा पुनातु ॥

सायङ्काले—सायंसन्ध्योपस्थानं करिष्ये ॥ उत्तमे शिखरे देवी भूम्यां ++ देवि यथासुखम् ॥ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥ यच्चिद्धि ते विशो यथा प्रदेव वरुण व्रतम् । मिनीमसि द्यवि द्यवि ॥ यत्किंचेदं वरुणदैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्तीयत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः । कितवासो यद्रिरिपुर्नदीवि यद्वाघा सत्यमुत यन्न विद्म । सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः ॥

सन्ध्यायै नमः, सावित्र्यै नमः, गायत्र्यै नमः, सरस्वत्यै नमः, सर्वाभ्यो देवताभ्यो नमः, कामोऽकार्षीन्मन्युरकार्षीन्नमो नमः । अभिवादये...अस्मि भोः ।

प्राच्यै दिशे नमः । दक्षिणायै दिशे नमः । प्रतीच्यै दिशे नमः । उदीच्यै दिशे नमः । ऊर्ध्वाय नमः । अधराय नमः । अन्तरिक्षाय नमः । भूम्यै नमः । विष्णवे नमः । ब्रह्मणे नमः । यमाय नमः ॥

यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औदुम्बराय दध्नाय



नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ चित्रगुप्ताय वै नमो नम इति ॥

ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥ विश्वरूपाय वै नमो नम इति ॥

नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे । त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशंकरात्मने ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः । केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ शङ्खचक्रगदापाणे द्वारकानिलयाच्युत । गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥ आकाशात्पतितं तोयं यथा गच्छति सागरम् । सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥ श्रीकेशवं प्रति गच्छत्यों नम इति । अभिवादये...... । नमस्कारः ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥

आचमनम् । ओं तत्सद्ब्रह्मार्पणमस्तु । ओं तत्सत् ।

॥ सन्ध्यावन्दनजपः समाप्तः ॥

---

## संध्यावन्दनभाष्यविषयानुक्रमणिका ।



॥ श्रीः ॥

# ॥ संध्यावन्दनभाष्यम् ॥

---

गण्डस्थलगलद्दानगन्धवासितदिङ्मुखम् ।
गजास्यं गिरिजासूनुं गणाध्यक्षमहं भजे ॥

सृष्ट्वा स्वात्मनि मायया जगदिदं तत्र प्रविष्टं च य-
द्धीतादात्म्यमवाप्य भोग्यमनिशं भुङ्क्ते मुखैः पञ्चभिः ।
एकं सद्गुणभेदतो हरिहरब्रह्मात्मतामप्यगा-
त्तत्सद्बोधसुखात्मकं परमजं ब्रह्माहमस्म्यद्वयम् ॥

(पञ्चभिर्मुखैः पञ्चभिर्ज्ञानेन्द्रियैरित्यर्थः ।)

श्रीमदुत्तरमायूरे मूललिङ्गस्य दक्षिणे ।
वृषारूढमहं वन्दे दक्षिणास्यं जगद्गुरुम् ॥

पूर्वं प्रथमांशे ब्राह्ममुहूर्तमारभ्य दन्तधावनपर्यन्तमनुष्ठानप्रकारोऽभिहितः । द्वितीयेंऽशे नित्यनैमित्तिकस्नानयोरनुष्ठानप्रकारोऽभिहितः । तृतीयेंऽशे काम्यस्नानमारभ्य पुण्ड्रधारणपर्यन्तमनुष्ठानप्रकारोऽभिहितः । इदानीं चतुर्थांशे संध्याद्यनुष्ठानप्रकारोऽभिधीयते ।

अत्रादौ प्रातःस्नानक्रमं क्रोडीकृत्य प्रदर्शयामः । तथाहि—शिखां बद्ध्वा, शुचिर्दर्भपाणिः, नद्यादिकं गत्वा, तटं प्रक्षाल्य, तत्र दर्भादि निधाय, पादौ प्रक्षाल्य, सकृदाचम्य, दर्भपाणिर्विघ्नेशध्यानपुरःसरं प्राणानायम्य संकल्प्य जलं नत्वा जलमवतीर्य, नदीदेवखातादिव्यतिरिक्तेषु परकीयतटाकादिषु स्नानं चेत्तत्र पञ्च त्रीन्वा मृत्पिण्डानुद्धृत्य, 'आपो वा इदं सर्वम्' इत्यादिभिः व्याहृतिभिश्च जलमभिमन्त्र्य, तटाकादिप्रवाहेषु सूर्याभिमुखः, नद्यादिप्रवाहेषु प्रवाहाभिमुखः, नद्यां नदे वा प्रवाहाभावेऽपि तद्वत्हृदवाप्यादौ नद्याद्यभिमुखो, हरिं स्मृत्वा, अवगाह्य, कक्षादि निर्मृज्य, स्नात्वा, तत्रैव द्विराचम्य, 'उदुत्तमं वरुणपाशम्' इत्यादि वरुणसूक्तं जपित्वा, आपोहिष्ठादिभिरब्दैवतैः मन्त्रैर्देवतीर्थेन दर्भैर्वा मार्जनं कृत्वा, जल एव स्थित्वा, 'ऋतं च सत्यं च' इत्यघमर्षणर्चो जपित्वा पुनः स्नात्वा मुक्तशिखस्तीरमागत्य बद्धशिखः सन्, जले दक्षिणं पादं स्थले वामपादं च कृत्वा, द्विराचम्य पुनर्जानूपरि जलं गत्वा, प्राङ्मुखो देवतीर्थेन देवान् संतर्प्य, निवीती उदङ्मुखः कण्ठकराङ्गुष्ठसक्तयज्ञोपवीतः ऋषीनृषितीर्थेन संतर्प्य, प्राचीनावीती दक्षिणाभिमुखः आकाशे पितॄन्ध्यायन् पितृतीर्थेन पितॄनूर्ध्वं संतर्प्य, तीरमागत्य 'यन्मया दूषितं तोयम्' इत्यादिना यक्ष्मतर्पणं तटे कृत्वा, तत्र शिखाजलप्लुतो निषिच्य, देहाम्बुस्रावार्थं कञ्चित्कालं तत्र स्थित्वा, अथ आसीनः



शुष्कवस्त्रखण्डेन कण्ठादुपरि शिरो निमृज्यान्येन वस्त्रखण्डेनाङ्गमार्जनं कृत्वा 'ये के चास्मत्कुले जाता' इत्यादिना बहिर्वस्त्रं चतुः संवेष्ट्यापसव्यं यथा तथा स्थले निष्पीड्य भूमौ स्थापयित्वा, शुष्कवस्त्रद्वयं प्रोक्ष्य, एकेन बहिर्वाससा शिरः प्रावृत्य, तत्र तटाकादौ स्नानं चेत्तर्हि स्नानवस्त्रमूर्ध्वमुद्धृत्य, भूमौ निक्षिप्य, नदीदेवखातादिषु स्नानं चेत् तर्ह्यधस्तादेव तत्त्यक्त्वान्तर्वासो धृत्वा अधृत्वा वा, वासः परिधाय, गुह्यवारिस्रावशुद्ध्यर्थं आजानुपादौ करौ च प्रक्षाल्य, तीर उपविश्य, द्विराचम्य, स्नानवस्त्रं प्रोक्ष्य, वस्त्रशोधनं कृत्वा, निवाती वस्त्रं चतुर्गुणं कृत्वा 'उच्छिष्टभागिनो दासा' इत्यादिमन्त्रेण त्रिर्निष्पीड्य, वामहस्तप्रकोष्ठे निक्षिप्य, उपवीती द्विराचम्य, वस्त्रं भूमौ स्थापयित्वा, त्रिपुण्ड्रमूर्ध्वपुण्ड्रं वा धृत्वा संध्यामुपासीतेति ॥

॥ अथ संध्यानियमः ॥

अत्र संध्यानुष्ठानकालमाह दक्षः—'रात्र्यन्तयामनाडी द्वे संध्यादिः काल उच्यते । दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः ॥' इति । यद्यपि संध्याशब्दः कालवाची तथापि तस्मिन्काले उपास्या देवता संध्याशब्देनोपलक्ष्यते । अत एवाह योगयाज्ञवल्क्यः—'संधौ संध्यामुपासीत नास्तगे नोद्गते रवौ । ब्रह्मणोपास्यते संध्या विष्णुना शङ्करेण च ॥ कस्मान्नोपासयेद्देवीं श्रेयस्कामो द्विजोत्तमः ।' इति । अत्राह

शङ्खः—'प्रातःसंध्यां सनक्षत्रां मध्यमां स्नानकर्मणि । सादित्यां पश्चिमां संध्यामुपासीत यथाविधि ॥' इति । स्नानकर्मणि मध्याह्नस्नानानन्तरम् इत्यर्थः । अत्र संवर्तकोऽप्याह—'संध्यां प्रातः सनक्षत्रामुपासीत यथाविधि । सादित्यां पश्चिमां संध्यामर्धास्तमितभास्कराम् ॥' इति । काश्यपस्त्वेवमाह—'ब्रह्मणो हृदयं विष्णुर्विष्णोश्च हृदयं शिवः । शिवस्य हृदयं संध्या तेनोपास्या द्विजोत्तमैः ॥' इति । व्यासस्त्वेवमाह—'योऽन्यत्र कुरुते यत्नं धर्मकार्येष्वपि द्विजः । विहाय संध्याप्रणतिं स याति नरकायुतम् ॥ अतिक्रामति यो मोहात्संध्यामन्यपरायणः । स साधुभिर्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ उत्तमा तु सनक्षत्रा मध्यमा लुप्ततारका । अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥' इति । सूर्यसहितेति गौणकालाभिप्रायेणोक्तम् । अत एवाह स एव—'यः सूर्यसहितां संध्यां सदा कुर्वीत मोहतः । न तस्य विद्यते संध्या सर्वकर्मबहिष्कृतः ॥ विधिनापि कृता संध्या कालातीताऽफला भवेत् । अयमेव हि दृष्टान्तो वन्ध्यास्त्रीमैथुनं यथा ॥' इति । अत्राफलेति छेदः । स एवाह—'अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया । कालातीतं तु यत्कुर्यादकृतं तद्विनिर्दिशेत् ॥' अकाले स्वकालात्पूर्वस्मिन्काल इत्यर्थः । स एवाह—'यः संध्यां कालतः प्राप्तामालस्यादतिवर्तते । सूर्यहत्यां समाप्नोति उलूकत्वमियात्ततः ॥' इति ।



अत्राह बोधायनः—'सायं प्रातः सदा संध्यां ये विप्रा नो उपासते । कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत् ॥ संध्याहीनो द्विजो नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥' इति । स एवाह—'या संध्या सा जगत्सूतिर्मायातीता सुनिष्कला । ऐश्वरी केवला शक्तिर्मूर्तित्रयसमुद्भवा ॥ तस्मात्सर्वप्रयत्नेन संध्योपासनमाचरेत् । उपासितो भवेत्तेन देवो योगतनुः परः ॥' इति । मूर्तित्रयस्य समुद्भवो यस्याः सा तथोक्तेति पञ्चमीबहुव्रीहिः । परः परमात्मेत्यर्थः । अत्र गोभिल आह—'संध्या येन न विज्ञाता संध्या येनानुपासिता । जीवमानो भवेच्छूद्रो मृतश्च श्वाभिजायते ॥' इति । न विज्ञाता स्वरूपतो न ज्ञातेत्यर्थः । चन्द्रिकायामभिहितम्—'उपास्य पश्चिमां संध्यां सादित्यां वै यथाविधि । गायत्रीमभ्यसेत्तावद्यावदृक्षाणि पश्यति ॥ पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि । गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम् ॥' इति ।

अत्राह योगयाज्ञवल्क्यः—

'त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।
प्राद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने ॥
अहन्यहनि ते सर्वे सूर्यमिच्छन्ति खादितुम् ।
अथ सूर्यस्य तेषां च युद्धमासीत्सुदारुणम् ॥
ततो देवगणास्सर्वे ऋषयश्च तपोधनाः ।

संधौ संध्यामुपासीना यत्क्षिपन्त्यन्वहं जलम् ॥
ब्रह्मव्याहृतिसंयुक्तं गायत्र्या चाभिमन्त्रितम् ।
तेन दह्यन्ति ते दैत्या वज्रीभूतेन वारिणा ॥
एतद्विदित्वा यः संध्यामुपास्ते संशितव्रतः ।
दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते ॥
यस्तु तां केवलां संध्यामुपासीत स पुण्यभाक् ।
तां परित्यज्य कर्माणि कुर्वन्प्राप्नोति किल्बिषम् ॥
स हन्ति सूर्यं संध्याया नोपास्तिं कुरुते तु यः ।
ये हिंसन्ति सदा सूर्यं मोक्षद्वारमनुत्तमम् ।
कथं मोक्षस्य संप्राप्तिर्भवेत्तेषां द्विजन्मनाम् ॥
कामाल्लोभाद्भयान्मोहात्संध्यां नातिक्रमेद् द्विजः ।
संध्यातिक्रमणाद्विप्रो ब्राह्मण्यात्पतते यतः ।' इति ॥

अथ संध्याख्यदेवतायाः कालभेदेन संध्यात्रयमाहात्रिः—'संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा ।' इति । अत्र तु संध्याशब्देन संध्योपासनरूपं कर्मोपलक्ष्यते । अन्यथा देवतायाः कर्तव्यत्वायोगात् ॥ अत एवाह पराशरः—'संध्यास्नानं जपो होमो देवतानां च पूजनम् । आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने ॥' संध्यास्नानं संध्याकर्मांगस्नानमित्यर्थः । अन्यथा षट्त्वसंख्याविरोधः प्रसज्येत । अत्र कालभेदेन देवताया नामभेदमाह व्यासः—'गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने । सरस्वती च सायाह्ने



सैव संध्या त्रिषु स्मृता ॥' इति । तस्याः कालभेदेन वर्णभेदमाह स एव—'गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका । सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥' इति । तस्याः रूपभेदमाह स एव—'गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी । सरस्वती विष्णुरूपा चोपास्या रूपभेदतः ॥' इति । आदित्यसंध्यास्वरूपमाह स एव—'उदये ब्रह्मरूपं तु मध्याह्ने तु महेश्वरम् । सायाह्ने विष्णुरूपं तु त्रिरूपं वै दिवाकरम् ॥ अनुसंध्यामुपासीत संध्यारूपं रविं द्विजः ।' इति । एतेन संध्यास्वरूपस्यादित्यस्य कालभेदेन ब्रह्ममहेश्वरविष्णुस्वरूपत्वमुक्तं भवति । अत्राह याज्ञवल्क्यः—'या संध्या सा तु गायत्री त्रिधाभूता प्रतिष्ठिता । संध्याप्युपासिता येन विष्णुस्तेन ह्युपासितः ॥' इति । तथा च संध्यात्रयेऽपि संध्योपासनं विहितं भवति । तच्चोपासनं परब्रह्मणः स्वस्य चैक्यानुसंधानरूपम् । अत एव तैत्तिरीयब्राह्मणम्—'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद' इति । अस्यायमर्थः । अर्घ्यप्रदानानन्तरं प्रदक्षिणं कृत्वा प्राणायाममेकं कुर्वन् कालभेदेन गायत्र्यादिनाम-रक्तादिवर्ण-ब्रह्मादिरूपोपेतः संध्याशब्दोक्तः असावादित्यो ब्रह्मेति संध्याऽभिन्नमादित्यं परब्रह्मत्वेनाभिध्यायन् सकलमैहिकमामुष्मिकं च भद्रमश्नुते । य एवमुक्तध्यानेन

विशुद्धान्तःकरणः आदित्यस्याध्यात्मभूतं परं ब्रह्म स्थूलसूक्ष्मकारणाख्यशरीरत्रयव्यतिरिक्तप्रत्यगात्मत्वेन वेद साक्षात्करोति सः पूर्वमपि ब्रह्मैव सन् स्वस्वरूपापरिज्ञानाज्जीवभावमापन्न इव स्थितः यथोक्तब्रह्मात्मैकत्वविज्ञानेन तदज्ञानापगमे सति ब्रह्मैवाप्येति प्राप्नोति निवृत्ताविद्यो भवतीति यावत् । एतेनासावादित्यो ब्रह्म ब्रह्मैवाहमस्मीति वाक्यद्वयस्याप्यर्थ उक्तो भवति । एवं च सति संधौ संध्यामुपासीतेति याज्ञवल्क्यस्मृत्या संध्यां यथोक्तनामवर्णरूपोपेतामर्कमण्डलान्तर्गतामादित्याख्यां परब्रह्मात्मिकां देवतां हृदि साहमस्मीत्युपासीत आत्मत्वेन तां जानीयादित्युक्तं भवति । अत एवाह व्यासः—'अभिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह । साहमस्मीत्युपासीत विधिना येन केनचित् ॥' इति । ध्यानदेशोऽपि चन्द्रिकायां दर्शितः—'गायत्रीं चिन्तयेद्यस्तु हृत्पद्मे समुपस्थिताम् । धर्माधर्मविनिर्मुक्तः स याति परमां गतिम् ॥' इति । गायत्रीं गायत्रीनामकसंध्यामित्यर्थः । अत्रोपासनमेव प्रधानमन्यन्मार्जनादिकं सर्वमङ्गमिति ज्ञेयम् । एवमेव चन्द्रिकामाधवीयादावभिहितम् । अत्राह व्यासः—'देशक्षोभे महापत्तौ मार्जनाद्यर्घ्याद्यसंभवे । संध्यागतं सहस्रांशुं मन्त्रैः कुर्यादुपस्थितम ॥' इति । उपस्थितमुपास्तिविषयमित्यर्थः । अत एव युधिष्ठिरादिभिर्युद्धोद्यतैः साङ्गानुष्ठानासमर्थैः सकलाङ्गपरित्यागेनादित्योपासनमात्रमनुष्ठितम् ।



तदुक्तं महाभारते—'ते तथैव महाराज दंसिता रणमूर्धनि । संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥' इति । संध्यागतं संधिमागतमित्यर्थः । उपतस्थिरे उपासितवन्त इत्यर्थः । अपरे तु अर्घ्यदानं संध्योपासनं गायत्रीजप उपस्थानं च प्रधानमिति यद्यपि वदन्ति तथापि संधौ संध्यामुपासीतेति, 'ब्रह्मणोपास्यते संध्या विष्णुना शङ्करेण च । कस्मान्नोपासयेद्देवीं श्रेयस्कामो द्विजोत्तमः ॥' इति, 'सादित्यां पश्चिमां संध्यामुपासीत यथाविधि' इति, 'संध्यां प्रातः सनक्षत्रामुपासीत यथाविधि' इति 'ब्रह्मणो हृदयं विष्णुर्विष्णोश्च हृदयं शिवः । शिवस्य हृदयं संध्या तेनोपास्या द्विजोत्तमैः ॥' इत्यादिभिर्बहुभिः स्मृतिवचनैः संध्योपास्तेरवश्यकर्तव्यत्वाभिधानात् उपास्तेरर्घ्यदानाद्यपेक्षया प्राधान्यमिति मन्तव्यम् । अर्घ्यदानसंध्योपास्तिगायत्रीजपोपस्थानानां चतुर्णामपि प्राधान्यपक्षस्तु देशक्षोभाद्यभावकाले तेषां सति संभवे वेदितव्यः । देशक्षोभादिना तेषामर्घ्यदानादीनामसंभवे सति संध्योपास्तेरेव प्राधान्यमित्यवगन्तव्यम् । तथा च त्रिष्वपि संध्याकालेषु पूर्वोक्तरीत्या गायत्र्यादिनाम-रक्तादिवर्ण-ब्रह्मादिरूपोपेतसंध्याशब्दोक्तमादित्यम् 'असावादित्यो ब्रह्म' इति वाक्यात्परब्रह्मत्वेन ध्यात्वा तस्याध्यात्मभूतं यत्सत्यज्ञानानन्दात्मकं सजातीयविजातीयस्वगतभेदरहितं निर्विशेषं तद्ब्रह्मैवाहमस्मीति प्रत्यग्ब्रह्मणोरैक्यानुसंधानमेव मुख्यं संध्योपासनमिति

स्थितिः ।

ननूक्तरीत्या प्रत्यग्ब्रह्मणोरैक्यानुसंधानरूपं संध्योपासनं ब्रह्मात्मैकत्वदर्शिभिरेव महात्मभिः कर्तुं शक्यते, तदन्यैस्तु मन्दबुद्धिभिर्विवेकशून्यैर्द्विजैः कथं संध्योपासनमनुष्ठेयमिति चेदुच्यते । प्रातः संध्याकाले गायत्रीनाम-रक्तवर्ण-ब्रह्मरूपोपेतसंध्यास्वरूप आदित्य इति विचिन्त्यासौ मण्डलान्तर्गत आदित्यः परं ब्रह्मेति विचिन्त्य तद्ब्रह्मैवाहमस्मीति चिन्तनरूपमहंग्रहोपासनं तैः कर्तव्यम् । मध्याह्ने सावित्रीनाम-शुक्लवर्ण-रुद्ररूपोपेतसंध्यारूप आदित्य इति विचिन्त्यासावादित्यः परं ब्रह्मेति विचिन्त्य तद्ब्रह्मैवाहमस्मीति चिन्तनरूपमहंग्रहोपासनं तैः कर्तव्यम् । सायंसंध्याकाले तु सरस्वतीनाम-कृष्णवर्ण-विष्णुरूपोपेतसंध्यारूप आदित्यः इति विचिन्त्य असौ मण्डलगत आदित्यः परं ब्रह्मेति विचिन्त्य तद्ब्रह्मैवाहमस्मीति चिन्तनरूपमहंग्रहोपासनं तैः कर्तव्यम् । तथाच विवेकशून्यैरपि द्विजैश्चिन्तनरूपस्याहंग्रहोपासनस्य कर्तुं शक्यत्वात् त्रिष्वपि संध्याकालेषु मार्जनाद्यङ्गसहितं संध्योपासनं सर्वैरपि द्विजैरवश्यमनुष्ठेयम् । तस्यैव प्रधानत्वात् ।

संध्याकालश्च सूर्योदयात्प्राक् घटिकाद्वयात्मकः । 'रात्र्यन्तयामनाडी द्वे संध्याकाल उदाहृतः' इति दक्षस्मरणात्, 'द्विनाडिका भवेत्संध्या' इति गर्गस्मरणात्, 'उदयात्प्राक्तनी संध्या घटिकाद्वयमीरिता' इति बोधायनस्मरणाच्च । यत्तु, प्रातःसंध्या त्रिनाडी स्यात्सायंसंध्या तथाविधा' इति स्मरणम् तत् 'चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायं च तथैव च ॥' इति वृद्धमनुस्मरणात् संध्याकालनिषिद्धाहारनिद्रामैथुनादिकर्मविषयम् । यत्तु 'द्विघटी तूदयादर्वाक् प्रहरार्धं तथोपरि । संध्याकालः स विज्ञेयो ह्यन्यथा लङ्घनं स्मृतम् ॥' इति स्मरणम् तद्राष्ट्रक्षोभजलालाभाद्यापत्स्वभ्यनुज्ञापरम् ।

माध्याह्निकस्य कालः ॥ मध्याह्नसंध्यायाः गौणकालमाह दक्षः—'अध्यर्धयामादासायं संध्या माध्याह्निकीष्यते' इति । अध्यर्धयामः अर्धयामाधिको यामः पादाधिकैकादशघटिकाभ्य ऊर्ध्वं आसायं सायाह्नात्प्राक् माध्याह्निकसंध्याया गौणकाल इत्यर्थः । आशौचानुष्ठानकालेऽपि संध्यां न त्यजेदित्याह पुलस्त्यः । यत्तु 'सूतके कर्मणां त्यागः संध्यादीनां विधीयते' इति मरीचिवचनम् 'राष्ट्रक्षोभे नृपाक्षिप्ते रोगार्ते शावसूतके । संध्यावन्दनविच्छित्तिः न दोषाय कदाचन ॥' इति संग्रहवचनं च तद्वाचनिकमन्त्रप्रयोगनिषेधाभिप्रायमिति मन्तव्यम् । अत एवाह पुलस्त्यः—'संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् । न त्यजेत्सूतके वापि त्यजन्गच्छेदधो द्विजः ॥' इति । अत्र विशेषमाह व्यासः—'प्रक्षिपेत्सूतके त्वर्घ्यं गायत्रीं तु समुच्चरन् । ततः प्रदक्षिणं कुर्यात्सूर्यं ध्यायेत्ततो द्विजः ॥' इति । एतन्मार्जनादिसक-

लसंध्याकर्मोपलक्षणार्थमिति केचित् । अपरे तु यदत्र संध्याकर्मणि श्रुतं जलाञ्जलिदानादि तदेवानुष्ठेयम् नान्यदिति वदन्ति ॥ वस्तुतस्तु सूतकाशौचानुष्ठातृभिर्द्विजैरर्घ्यप्रदानमात्रं मन्त्रोच्चारणं कृत्वा कर्तव्यम्, आचमनमार्जनादिकमन्यत्सर्वं मनसैव मन्त्रान्स्मृत्वा कर्तव्यम् नतु मन्त्रोच्चारणपुरस्सरं तत्कर्तव्यम् , प्राणायामस्तु न कर्तव्य इति प्रतिभाति । 'प्राणायाममृते द्विज' इति पुलस्त्यस्मरणात् । अयमर्थो विद्वज्जनैश्चिन्तनीयः । किंच शिरस्स्नानं कृत्वैव तैः संध्यावन्दनादिकर्म कर्तव्यम् । तदाह संग्रहकारः—'संध्याकर्माग्निहोत्रं च प्रेतकर्माणि चाप्लुतः । कुर्यादन्येन होमं तु कारयेत्तान्यदाचरेत् ॥' इति । किंचार्द्रवाससा सहैव जले स्थित्वा मार्जनाचमनाद्यङ्गसहितं संध्यादिकर्म कर्तव्यम् ॥ 'आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम्' इति स्मरणादित्यलं प्रसङ्गेन ।

प्रासङ्गिककथनानन्तरं प्रकृतमेवात्र वदामः । शक्तस्य द्विजस्य मुख्यकालातिक्रमे प्रायश्चित्तार्थमेकमर्घ्यदानं तेन कर्तव्यम् । तदाह याज्ञवल्क्यः—'आचान्तो विधिवत्प्राणानायम्याध्यँ चतुर्थकम् । कालात्ययविशुद्ध्यर्थं कृत्वा संध्यां समाचरेत् ॥' इति । उपासीतेत्यर्थः । स एव पुनराह — 'चतुर्थमर्घ्यं गायत्र्या दद्याद्व्याहृतिसंपुटम् । कालात्ययविशुद्ध्यर्थं त्रिसंध्यासु समाचरेत् ॥' इत्यादि । इदं प्रायश्चित्तमुदयात्पूर्वमुख्यकालातिक्रमे वेदितव्यम् । तत्र मुख्यादिकालश्च —'उत्तमा तारकोपेता मध्यमा लुप्ततारका । अधमा सूर्यसहिता' इति पूर्वमेवाभिहितः । अत्र सूर्यसहितत्वं नाम मण्डलैकदेशदर्शनं, सूर्योदयानन्तरं प्रायश्चित्तान्तरविधानात् ॥ तदुक्तं—'प्राणायामत्रयं कृत्वा संध्याकर्म समाचरेत्' इति ॥ इदमप्युक्तं—'प्रातःकाले त्रयं कुर्यात्सङ्गवे द्वौ दशोपरि । षट्त्रिंशन्मध्यमे काले ततो न प्राणसंयमः ॥' इति । इदं प्रायश्चित्तमुदयानन्तरं भवति 'द्विघटी तूदयादर्वाक् प्रहरार्धं तथोपरि' इति वचनात् । उदयानन्तरमर्धयामावधि गौणकालस्तत्र प्राणायामत्रयं, तत ऊर्ध्वं षड्घटिकापर्यन्तं षट्प्राणायामाः, तत ऊर्ध्वं द्वादशघटिकापर्यन्तं द्वादश प्राणायामाः, तत उपर्यहर्मध्यपर्यन्तं षट्त्रिंशत्प्राणायामाः, अहर्मध्यादूर्ध्वं न प्राणायामरूपं प्रायश्चित्तम्, अपितु प्रातरतिक्रमेऽहरुपवासः सायमतिक्रमे रात्र्युपवासः । तदाह बोधायनः—'सायमतिक्रमे रात्र्युपवासः प्रातरतिक्रमेऽहरुपवासः' इति । इदमबुद्धिपूर्वविषयम् । बुद्धिपूर्वे तु शङ्ख आह—'संध्यादिनित्यलोपे तु दिनमेकमभोजनम् । दिनद्वये त्रिरात्रं स्यात्कृच्छ्रार्धं तु दिनत्रये ॥ दशाहे कृच्छ्रमेकं स्यादूर्ध्वं चान्द्रायणं चरेत् । चान्द्रायणं पराकं च मासादूर्ध्वं विधीयते ॥ ततोऽप्येवं प्रकल्प्यं स्याद्यावन्मासक्रमेण तु । वर्षादूर्ध्वं हि पतति नित्यकर्मबहिष्कृतः ॥' इति । प्रायश्चित्तान्तरमाह संवर्तकः—'अर्घ्यप्रदानतः पूर्वमुदयेऽस्तमयेऽपि वा । गायत्र्यष्टशतं जप्यं प्राय-

श्चित्तं द्विजातिभिः ॥' इति । संग्रहमाधवीये त्वभिहितम्— 'आसङ्गवं प्रातस्संध्याया गौणः कालः, आप्रदोषावसानं च सायंसंध्याया गौणकाल' इति । गौणकालातिक्रमेऽपि प्रायश्चित्तं स एवाह—'उपासीत न चेत्संध्यामग्निकार्यं न चेत्कृतम् । गायत्र्यष्टसहस्रं तु जपं कृत्वा विशुध्यति ॥' इति । प्रायश्चित्तान्तरमुक्तम् ऋग्विधाने—'यदादीध्ये जपेन्मन्त्रं दशवारं दिने दिने । अकाले नित्यकर्माणि काले काले कृतानि वै ॥' इति । मन्त्रश्च 'यदादीध्येनदविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः । न्युप्ताश्च बभ्रवो वाचमक्रतं येमीदेषां निष्कृतं जारिणीव ॥' इति ऋग्वेदस्थः । उक्तप्रायश्चित्ताकरणे बाधकमाह संग्रहकारः—'कालात्यये त्वकृत्वैवं कृता संध्या तु निष्फला' इति । संध्यात्रयस्य गृहादिदेशविशेषतारतम्यमाह व्यासः—'गृहे त्वेकगुणा संध्या गोष्ठे दशगुणा स्मृता । शतसाहस्रिका नद्यामनन्तं विष्णुसंनिधौ ॥ बहिः संध्या दशगुणा सहस्रं जाह्नवीजले ।' इति । अत एव हारीतोऽप्याह—'ततः संध्यामुपासीत बहिर्गत्वा यथाविधि' इति ।

॥ इति संध्यानिर्णयः ॥

इदानीं संध्यानुष्ठानप्रकारोऽभिधीयते । उपवीती बद्धशिखः, पादौ हस्तौ प्रक्षाल्य, द्विराचम्य, विश्वामित्रैः कुशैर्वा आग्नेयग्रन्थिना पवित्रं धृत्वा हिरण्मयं वा धृत्वा सकृत्प्राणानायम्य प्रातःसंध्यामुपासिष्य इति संकल्प्य, मध्याह्ने



माध्याह्निकीं संध्यामुपासिष्य इति संकल्प्य, सायं सायंसन्ध्यामुपासिष्य इति संकल्प्य, वारिणा पुण्ड्रं धृत्वा, आपोहिष्ठेत्यादिभिः सप्तभिः पादैः सप्रणवैस्तद्रहितैर्वा सप्त विप्रुषः शिरस्युत्क्षिप्याष्टमेनैकां विप्रुषं पादयोर्निक्षिप्य नवमेनैकां शिरस्युत्क्षिप्य सप्रणवव्याहृत्यात्मानं परिषिञ्चेत् । तदाह व्यासः—'आपोहिष्ठेत्यृचैः कुर्यान्मार्जनं तु कुशोदकैः । प्रणवेन तु संयुक्तं क्षिपेद्वारि पदे पदे ॥ विप्रुषोऽष्टौ क्षिपेदूर्ध्वमधो यस्य क्षयाय च । रजस्तमोमोहजाताञ्जाग्रत्स्वप्नसुषुप्तिजान् ॥ वाङ्मनःकायजान्दोषान्नवैतान्नवभिर्दहेत् ॥' इति । अत्राह नारायणः—'प्राङ्मुखोदङ्मुखो वापि संध्योपासनमाचरेत्' इति । प्रणवयुक्तेन मन्त्रेण प्रोक्षणे फलविशेषमाह शौनकः—'नवप्रणवयुक्तेन आपोहिष्ठेत्यृचेन तु । संवत्सरकृतं पापं मार्जनान्ते विनश्यति ॥' इति । अत्राह ब्रह्मा—'ऋगन्ते मार्जनं कुर्यात्पादान्ते वा समाहितः । तृचस्यान्तेऽथवा कुर्याच्छिष्टानां मतमीदृशम् ॥' इति । अत्र बहुप्रमाणानुगुण्याच्छिष्टाचाराच्च पादान्तमार्जनमेव कार्यम् । स्मृत्यर्थसारे त्वभिहितम्—'आपोहिष्ठेत्यृचा सम्यगुल्लेख्यं न तु वेत्ति यः । न तस्य विद्यते संध्या यथा शूद्रस्तथैव सः ॥' इति । प्रतिपादमेकैकमेव वोल्लेख्यं कार्यम् । एवं च सति प्रत्यृचं मार्जनत्रयमेव न चतुर्थमिति मन्तव्यम् । उल्लेख्यं मार्जनम् । तदुक्तं तत्रैव—'उत्तानदेवतीर्थेन दर्भाग्रैर्मूर्ध्नि विप्रु-

षाम् । स्पृष्ट्वाप ऊर्ध्वविक्षेप उल्लेख्यमिति सूरयः ॥' इति । प्राहुरिति शेषः । तथा च शुष्कवासास्तीर आसीनः जले चेज्जानुदघ्नजले स्थित्वा वामपाणिना जलं स्पृशन् उत्तानदेवतीर्थेन दर्भाग्रैर्मार्जनं कुर्यादित्युक्तं भवति । तदाह हारीतोऽपि—'मार्जनार्चनबलिकर्मभोजनानि देवतीर्थेन कुर्यात्' इति । तच्च मार्जनं धाराच्युतं न कर्तव्यम् । अत एवाह ब्रह्मा—'धाराच्युतेन तोयेन संध्योपास्तिर्विगर्हिता । न प्रशंसन्ति पितरो न प्रशंसन्ति देवताः ॥' इति । अत्र हेतुमाह स एव—'मन्त्रपूतं जलं यस्मादापोहिष्ठाभिमन्त्रितम् । पतत्यशुचिदेशेषु तस्मात्तत्परिवर्जयेत् ॥' इति । अनेन मार्जनजलबिन्दुः क्षितितले यथा न च्युतो भवति तथा शिरस्येव मार्जनं यत्नतः कुर्यादित्युक्तं भवति । कथं तर्हि मार्जनमिति चेत् स एवाह—'नद्यां तीर्थे ह्रदे वापि भाजने मृण्मयेऽपि वा । औदुम्बरेऽथ सौवर्णे राजते दारुसंभवे ॥ कृत्वा तु वामहस्ते वा संध्योपास्तिं समाचरेत् ।' इति । औदुम्बरे ताम्रमये कृत्वा, उदकमिति शेषः । नद्यां तीर्थे ह्रदे वापीत्येतद्भूमिषु जलोपलक्षणम् । यत्तु—'वामहस्ते जलं कृत्वा ये तु संध्यामुपासते । सा संध्या वृषली ज्ञेया असुरास्तैस्तु तर्पिताः ॥' इति वचनम् । तन्मृण्मयादिभाजनसंभवविषयम् । तदसंभवे तु 'कृत्वा तु वामहस्ते वा' इति वामहस्तविधानमिति ज्ञेयम् । मार्जने कंचन नियममाह व्यासः—'उपवीती बद्धशिखः स्वाचान्तो द्विरनाकुलः । प्राङ्मुखः सततं विप्रः संध्योपासनमाचरेत् ॥' इति । याज्ञवल्क्यः कंचिन्नियममाह—'भूमिष्ठमुदकं स्पृष्ट्वा प्रसव्येन करेण तु । मार्जनाद्याचरेद्विद्वान्संध्याकर्मसु सर्वदा ॥' इति । आपोहिष्ठादिमार्जनमन्त्रस्य ऋष्यादीनाह व्यासः—'आपोहिष्ठादितिसृभिर्मार्जयेत्तु कुशोदकैः । सिंधुद्वीप ऋषिश्छन्दो गायत्र्यापो हि देवता ॥ मार्जने विनियोगश्च अब्दैवत्ये प्रकीर्तितः ॥' इति । ऋष्याद्यज्ञाने बाधकमाह—'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । नाध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः ॥' इति । याज्ञवल्क्योऽपीममर्थमाह—'ब्राह्मणं विनियोगं च छन्द आर्षं च दैवतम् । अज्ञात्वा पञ्च यः कुर्यान्न स तत्फलमश्नुते ॥' इति । मन्त्रार्थोऽपि ज्ञातव्यः । यतः अविदितार्थमन्त्रा अनुष्ठेयार्थप्रकाशनसमर्था न भवन्ति । अतः प्रतिपन्नमन्त्रार्थोऽनुष्ठातैव वीर्यवत्तरकर्मफलानि प्राप्नोतीति न्यायसिद्धम् । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतेः । अत एवाह व्यासोऽपि—'पाठमात्रावसानस्तु पङ्के गौरिव सीदति' इति । तथा च मन्त्रार्थज्ञानमावश्यकमिति सिद्धम् । तदर्थोऽत्राभिधीयते ।



तथाहि । आपोहिष्ठादिमन्त्रार्थः—आपो हिष्ठादिमन्त्रस्य सिन्धुद्वीप ऋषिः । गायत्री च्छन्दः । आपो देवता । प्रोक्षणे विनियोगः । आपो हि ष्ठा मयो भुवः । हे

आपः यूयं मयो भुवः स्थ । मय इति सुखनाम । तस्य भावयित्र्यः स्थ । हिशब्दः प्रसिद्धिवाचकः । **ता न ऊर्जे दधातन** । ता यूयं नः अस्मभ्यम् । ऊर्जे, द्वितीयार्थे चतुर्थी, ऊर्जम् अन्नं 'ऊर्गन्नम्' इति श्रुत्या ऊर्क्छन्दस्यान्नवाचित्वात । अन्नमस्मभ्यं दत्तेत्यर्थः । **महे रणाय चक्षसे** । महे महते रणाय रमणीयाय चक्षसे दर्शनाय ज्ञानाय । अत्रापि द्वितीयार्थे चतुर्थी । दधातनेत्यनुषङ्गः । तथा च महद्रमणीयं ज्ञानं ब्रह्मात्मैकत्वसाक्षात्काररूपमस्मभ्यं धत्तेत्यर्थः । **यो वश्शिवतमो रसः** । वः युष्माकं संबन्धी यः शिवतमः रसः ब्रह्मात्मैकत्वानुभवरूपः । **तस्य भाजयतेह नः** । तस्येति द्वितीयार्थे षष्ठी । तं रसं जननमरणादिसंसारामयभेषजभूतम् इह अस्मिन्नेव जन्मनि नः अस्मान् भाजयत सेवयतेत्यर्थः । अत्र दृष्टान्तः—**उशतीरिव मातरः** । उशतीः उशत्यः कामयमानाः मातरः पुत्रान् क्षीरादिरसेन यथा भाजयन्ति तथा पूर्वोक्तं युष्मदीयं रसमस्मान्भाजयतेति ॥ **तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ** ॥ हे आपः यूयं च यस्य ब्रह्मात्मैकत्वानुभवरूपस्य रसस्य क्षयाय निवासाय जिन्वथ प्रीता भवथ । तस्मै द्वितीयार्थे चतुर्थी । वः युष्माकं तं पूर्वोक्तानुभवरूपं रसम् । अरम् अलं पर्याप्तं गमाम गच्छेम । **आपो जनयथा च नः** । अत्रासकृत्प्रार्थनामिह जन्मन्येव तत्सिद्ध्यर्थमिति ज्ञेयम् । हे आपः नः अस्माकं



चित्तशुद्धिं जनयित्वा विविदिषाद्वारा श्रुत्यन्तश्रवणतदर्थमनननिदिध्यासनसाध्यं सच्चिदानन्दघनापरिच्छिन्नब्रह्मात्मनावस्थानलक्षणमोक्षसाधनं ब्रह्मात्मैकत्वविज्ञानं जनयथ । चशब्देन व्यवहारदशायामैहिकपशुपुत्रधनधान्यायुरारोग्यादींश्च जनयथेत्यर्थः । नन्वपां जडत्वात्तासां कथं मोक्षफलकज्ञानदातृत्वमैहिकामुष्मिकफलदातृत्वं च स्यादिति चेन्नैवम् । अत्रत्याप्शब्देनान्तर्यामी परमात्मैवोच्यते । 'योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' इति श्रुतेः फलमत उपपत्तेरित्यधिकरणन्यायेन तस्यैव सर्वफलदातृत्वोपपत्तेश्च । तथा च सच्चिदानन्दलक्षणं सर्वगतं सर्वज्ञं सर्वशक्तियुक्तं यत् परं ब्रह्म तदेवाप्शब्देनाभिहितं न तु जडजलम्, तस्यैहिकामुष्मिकादिफलदातृत्वाद्यसंभवात् । ननु कथमेकस्मिन्ब्रह्मणि बहुवचनस्योपपत्तिरिति चेन्नैवं, दाराः कलत्रमित्यत्रैकस्मिन्कलत्रे यथा बहुवचनस्योपपत्तिस्तथात्राप्युपपत्तिरित्यलं विस्तरेण । मार्जनफलमाह व्यासः—'आपोहिष्ठाः सुप्रसिद्धा नव पादा भवन्ति ते । पादे पादे क्षिपेद्वारि ब्रह्महत्यां व्यपोहति ॥' एवमुक्तविधिना मार्जयित्वा सूर्यश्चेत्यपः पिबेत् । तथा च शौनकः—'सूर्यश्चेत्यनुवाकेन प्रातःकाले पिबेदपः । आपः पुनन्त्वित्येतेन मध्याह्ने च जलं पिबेत् ॥ अग्निश्चेत्यनुवाकेन सायंकाले त्वपः पिबेत् ।' इति ।

अत्राह व्यासोऽपि—'सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् । आपः पुनन्तु मध्याह्ने ततस्त्वद्भिर्द्विराचमेत् ॥ ततः सुरभिमत्या च मार्जनं तु कुशोदकैः । कुर्याद्धिरण्यवर्णाभिर्यथाशाखं तु मार्जनम् ॥' सुरभिमती दधिक्राव्ण्ण इति ऋक् । अत्र पितामहोऽप्याह—'सूर्यश्चेत्यनुवाकेन त्वपः पीत्वा समाहितः । आत्मानं प्रोक्षयेत्पश्चात्सपवित्रकरो द्विजः ॥ प्रोक्षेत्सुरभिमत्या च आपोहिष्ठादिभिस्तथा । प्रदक्षिणं परिषिच्य त्वारभेच्छ्रुतिचोदितम् ॥' इति । अपः पीत्वा द्विराचम्यात्मानं प्रोक्षयेदित्यर्थः । श्रुतिचोदितम् अर्घ्यप्रदानमित्यर्थः । अत्राचारनवनीतकारैरप्पादीक्षितैः आत्मानं हृदयदेशमिति व्याख्यातम् ।

सूर्यश्चेत्याद्यनुवाकानां ऋष्यादिः । 'सूर्यानुवाकस्याग्निर्षिश्छन्दो गायत्रमंशुमान् । देवता विनियोगोऽपां प्राशने समुपस्पृशेत् ॥ ऋषिरग्निश्च मेत्यस्य सूर्यो वा वामनोऽपि वा । छन्दो गायत्रमित्युक्तं देवताग्निः समीरितः ॥ आपःपुनन्तुमन्त्रस्य विश्वेदेवास्त्वथर्षयः । छन्दोऽनुष्टुप् देवतापो बृहस्पतिरथापि वा ॥ आत्मानं प्रोक्षयेत्पश्चाद्दधिक्राव्ण्ण इत्यृचा । आपोहिष्ठादितिसृभिः ऋग्भिश्च सकुशैर्जलैः ॥ दधिक्राव्ण्ण इत्यस्य वामदेव ऋषिः स्मृतः । छन्दोऽनुष्टुब् विश्वेदेवा देवताः प्रोक्षणे स्मृताः ॥ व्याहृत्या तत आत्मानं परिषिञ्चेत्समस्तया ॥' इति । अन्यत्रोक्तम्—'सूर्यश्चेत्यनुवाकस्य छन्दो गायत्रमुच्यते । सविता देवता त्वस्य ऋषिरग्निरिति स्मृतः ॥' इति । छन्दोगानां तु सूर्यश्चाग्निश्चेत्युभयोः स्थाने, अहश्च मादित्यश्च पुनात्विति प्रातः, रात्रिश्च मा वरुणश्च पुनात्विति सायमिति मन्त्रद्वयं गौतमेनोक्तम् अन्यत्सर्वं समानम् । स्वस्वशाखोक्तरीत्या सर्वेषां संध्यानुष्ठानमिति विवेकः ।



अत्र सूर्यश्चेत्यनुवाकार्थोऽभिधीयते । **सूर्यश्चेत्यनुवाकस्य अग्नि ऋषिः गायत्रीच्छन्दः सूर्यो देवता अपां प्राशने विनियोगः । सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः, पापेभ्यो रक्षन्ताम्** । सुष्ठु ईरयति प्रेरयतीति सूर्यः आदित्यान्तर्वर्ती परमात्मा । 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' इति श्रुतेः, अन्तस्तद्धर्मोपदेशादित्यधिकरणन्यायाच्च । तत्प्रेरणे सुष्ठुत्वं नाम सर्वजगन्नियन्तृत्वम् । 'यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' इति श्रुतेः । तन्नु सर्वनियन्तृत्वमाधिकारिकपुरुषस्य देवतात्मनः सूर्यस्य न संभवति, तस्यापि परब्रह्मनियम्यत्वात् । मन्युः क्रोधः । मन्युपतयो रागादयः । रागादेर्मन्युपतित्वं नाम मन्यूत्पादकत्वम् । उत्पद्यते हीष्टवस्तुप्राप्तिकुण्ठने मन्युः । एते सर्वे मा मां मन्युकृतेभ्यः अत्रत्येन द्वितीयेन मन्युशब्देन रागादयोऽपि

लक्ष्यन्ते । तथाच मन्युकृतेभ्यः रागादिकृतेभ्यश्च पापेभ्यो रक्षन्तां रक्षन्तु । सर्वत्र चकारः समुच्चयार्थः । मन्योः रागादीनां च पापेभ्यो रक्षकत्वं नाम स्वस्वानुदयेन पापानुत्पादकत्वं, सर्वेषां पापानां कामक्रोधादिमूलकत्वात् । सूर्यशब्दाभिहितस्य परस्य ब्रह्मणः कामक्रोधादिकृतपापेभ्यो रक्षकत्वं नाम 'यो मनसि तिष्ठन् मनसोऽन्तरो यन्मनो न वेद यस्य मनश्शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत' इति बृहदारण्यकश्रुत्या तस्य सर्वप्राणिबुद्धिप्रेरकत्वात् पापजनककामक्रोधादिबुद्धिवृत्त्यनुत्पादकत्वम् । तथा च पापजनककामक्रोधादिबुद्धिवृत्तीर्निवार्य स्वस्वरूपावस्थानलक्षणमोक्षे साक्षात्साधनीभूतां भागत्यागलक्षणालक्षिततत्त्वंपदार्थविषयिणीमनाद्यविद्यानिवर्तनपटीयसीं ब्रह्मविद्याभिधामखण्डाकारधीवृत्तिं जनयत्वित्यर्थः । किंच **यद्रात्रिया पापमकार्षं, मनसा वाचा हस्ताभ्यां, पद्भ्यामुदरेण शिश्ना, रात्रिस्तदवलुम्पतु** । अत्र सप्तम्यर्थे तृतीया । रात्र्या रात्रौ यत्पापमकार्षं कृतवानस्मि । केन साधनेन पापानुष्ठातृत्वमिति चेदुच्यते—मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्नेति । मनसा परहिंसादिचिन्तनेन, वाचा अनृतभाषणादिना, हस्ताभ्यामसत्प्रतिग्रहादिना, पद्भ्यामनाक्रमितव्यकलिङ्गकेरलादिदेशाद्याक्रमणेन, उदरेणाभक्ष्यभक्षणादिना, शिश्ना शिश्नेन परदाराभिमर्शनादिना । अत्र मन्त्रोक्तानि मनआदीनि इन्द्रियान्तराणामप्युपलक्षणानि । एतेन त्रिविधकरणकृतान्यपि पापान्युक्तानीति ज्ञेयम् । तानि च हारीतेन विवृतानि—'सर्वाभक्ष्यभक्षणमपेयपानमयाज्ययाजनमसत्प्रतिग्रहणं परदाराभिमर्शनं परद्रव्यापहरणं प्राणिहिंसनं चेति शारीराणि । वाक्पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाचिकानि । परोपतापनं पराभिद्रोहः क्रोधो लोभो मोहः अहङ्कारश्चेति मानसानि ।' इति । तथाचान्तःकरणाख्यमनसा ज्ञानेन्द्रियपञ्चकेन च यत्पापं कृतवानस्मि तत्सर्वं रात्रिरवलुम्पतु विनाशयत्वित्यर्थः । रा दाने त्रै रक्षण इत्याभ्यां व्युत्पन्नेन रात्रिशब्देन चतुर्विधफलप्रदं सर्वजगद्रक्षकं परं ब्रह्मैवाभिधीयते । तदेव ब्रह्म स्वभजनानुरूपं मनोवाक्कायपापापनोदनं कर्तुं समर्थं भवति । तस्य सर्वज्ञत्वात्सर्वशक्तियुक्तत्वाच्च । न तु केवलकालरूपा रात्रिः तस्याः कायिकवाचिकमानसिकसर्वपापनाशकत्वासंभवात् । **यत्किंच दुरितं मयि । इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा** । किंचानेकेषु पूर्वजन्मसु संचितं यत्किञ्चिद्दुरितं पापं मयि वर्तते तदिदं सर्वमप्यवलुम्पतु विनाशयत्विति पूर्वेणान्वयः । तथा च पूर्वं मन्युकृतेभ्यः पापेभ्यो रक्षन्तामिति क्रोधादिबुद्धिवृत्तीर्निवार्य पापानुत्पादकत्वमुक्तम् । मध्ये यद्रात्रिया पापमकार्षं, मनसा वाचा हस्ताभ्यामित्यारभ्य रात्रिस्तदवलुम्पत्विति प्रतिदिनं रात्रिकृतपापविनाशकत्वं तस्योक्तम् ।

अन्ते यत्किञ्च दुरितं मयीति पूर्वजन्मसञ्चितपापविनाशकत्वं तस्योक्तमिति न पुनरुक्तिः । तथा च ब्रह्मात्मैकत्वविज्ञानोत्पत्तिप्रतिबन्धकपापाभावाच्छुद्धान्तःकरणोऽहममृतयोनौ मोक्षकारणभूते सूर्ये सुष्ठु ईरयति प्रेरयतीति व्युत्पत्त्या सर्वप्राणिबुद्धिप्रेरके ज्योतिषि स्वप्रकाशचैतन्यस्वरूपे परस्मिन्ब्रह्मणि सच्चिदानन्दघने कालतो देशतो वस्तुतश्चापरिच्छिन्ने निरस्तसमस्तभेदे तत्पदलक्ष्ये, स्थूलसूक्ष्मकारणाख्यशरीरत्रयात्पृथक्कृतं प्रत्यक्चैतन्यस्वरूपं त्वंपदलक्ष्यं मां जुहोमि तदात्मनैवावस्थितं करोमीत्यर्थः। ननु ज्योतिश्शब्दस्य सूर्यादौ प्रसिद्धत्वात्तस्य कथं परब्रह्मपरत्वमिति चेत नैवम् । 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते । तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥' 'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥' 'अथ यदतः परो दिवो ज्योतिर्दीप्यति एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इत्यादिश्रुतिभिः ज्योतिश्चरणाभिधानात ज्योतिर्दर्शनादित्याद्यधिकरणन्यायेन च ज्योतिश्शब्दस्य ब्रह्मपरत्वात् । किंच माममृतयोनौ सूर्ये ज्योतिषि जुहोमीत्यैक्यबोधकमन्त्रबलादप्यत्रत्यसूर्यशब्दः ज्योतिश्शब्दश्च ब्रह्मपर एव नतु देवतात्मपरः तेन जीवस्यैक्यायोगादित्यलं विस्तरेण । स्वाहेत्युक्त्वापः पिबेदित्यर्थः ॥



इदानीमापःपुनन्त्वित्यादिमन्त्रार्थोऽभिधीयते । **आपः पुनन्त्वित्यनुवाकस्य विश्वेदेवा ऋषयः, अनुष्टुप् छन्दः, आपो देवता । अपां प्राशने विनियोगः ॥**

**आपः पुनन्तु पृथिवीम्** । मन्त्रपूता आपः पृथिवीं पुनन्तु शुद्धां कुर्वन्तु । अत्रत्यपृथिवीशब्देन स्थूलशरीरमुच्यते, अस्य पाञ्चभौतिकत्वेऽपि पृथिवीभागस्याधिकत्वात् । **पृथिवी पूता** स्थूलशरीरं पूतं सत् **पुनातु मां** लिङ्गशरीरोपाधिकं मां तद्गतरागद्वेषमोहदुर्वासनादिमलनिरासेन शुद्धं करोतु । **पुनन्तु ब्रह्मणस्पतिः** । ब्रह्मणश्चतुर्मुखस्य पतिः स्वामी । यद्वा ब्रह्म प्रणवः वेदो वा तस्य पतिः परमात्मा तस्य प्राधान्येन प्रतिपाद्यमानत्वात् । मां पुनन्तु । पुनात्विति वक्तव्ये पुनन्त्विति बहुवचनं छान्दसम् । अविद्यामलनिरासेन परमात्मा मां शुद्धं करोत्विति प्रार्थना । **ब्रह्मपूता पुनातु माम्** । ब्रह्मणा पूर्वोक्तपरमात्माख्येन पूता आपः मां पुनातु । अत्र पुनन्त्विति वक्तव्ये पुनात्वित्येकवचनं छान्दसम् । तत्र ब्रह्मपूता आपः पापनिरसनेन मां पुनन्तु शुद्धं कुर्वन्त्विति प्रार्थना । निरसनीयानि पापानि कथ्यन्ते । **यदुच्छिष्टमभोज्यम्** । यत्पुरुषान्तरस्योच्छिष्टं मया भुक्तं यदभोज्यं पतिताद्यन्नं मया भुक्तम् । **यद्वा दुश्चरितं मम** । यच्च दुश्चरितं परदारादिगमनं मया कृतम् । **सर्वं पुनन्तु मामापः । असतां च प्रतिग्रहम्** । असज्जनेभ्यश्च द्रव्यप्रतिग्रहनिमित्तं

यत्पापं कृतं तत्सर्वं पापसङ्घं ब्रह्मपूता आपः नाशयित्वा मां पुनन्त्वित्यर्थः । स्वाहेत्युक्त्वापः पिबेत् । तथा च निरस्तसमस्तपापोऽहं शुद्धान्तःकरणः सन् श्रुत्यन्तश्रवणतदर्थमनननिदिध्यासनसाध्यं ब्रह्मात्मैकत्वसाक्षात्कारं लब्ध्वा सच्चिदानन्दानन्तात्मकब्रह्मात्मनावस्थानलक्षणां जीवन्मुक्त्यवस्थामनुभवितुं योग्यो भवानीति मन्त्रार्थः ॥

इदानीमग्निश्चेत्यनुवाकार्थोऽभिधीयते । **अग्निश्चेत्यनुवाकस्य सूर्य ऋषिः, गायत्री छन्दः, अग्निर्देवता, अपां प्राशने विनियोगः** । अग्निश्चेत्यादिरयं मन्त्रः सूर्यश्चेत्यादिपूर्वमन्त्रेण समानार्थकः । इयांस्तु विशेषः । अभितो गतः अग्निरिति व्युत्पत्त्या अग्निशब्देन सर्वगतं परं ब्रह्माभिहितम् । अह्नेति सप्तम्यर्थे तृतीया । अहश्शब्देनापि परं ब्रह्माभिहितम्, केवलकालरूपस्याह्नस्त्रिविधकरणकृतसर्वपापनाशकत्वासंभवात् । सत्यशब्देनापि कालत्रयाबाध्यं परं ब्रह्मैवाभिहितम्, सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । अन्यत्सर्वं समानम् ॥

संध्यात्रयेऽप्यप्प्राशनानन्तरमाचमनद्वयं कुर्यात् । ततस्त्वद्भिर्द्विराचमेदित्याचमनद्वयविधानात् । अनन्तरं सुरभिमत्या आपोहिष्ठादितिसृभिश्च प्रोक्षणमवश्यं कर्तव्यम् । तदर्थोऽत्राभिधीयते । **दधिक्राव्ण इत्यस्य मन्त्रस्य वामदेव ऋषिः, अनुष्टुप् छन्दः, विश्वेदेवा देवता, प्रोक्षणे विनियोगः । दधिक्राव्णो अकारिषम् ।** जगन्ति दधत् क्रावयति व्याप्नोतीति दधिक्रावा परमात्मा । यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतमित्यादिश्रुत्या तस्य सर्वाधारत्वात् 'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुत्या सर्वव्यापित्वाच्च । दधिक्राव्ण इति षष्ठ्येकवचनम् । अकारिषं तस्य स्वमाहात्म्यप्रतिपादकोपनिषद्भिः स्तुतिं कृतवानस्मि । कीदृशस्येति चेत्—**जिष्णोरश्वस्य वाजिनः** । जिष्णोर्जयशीलस्य । ननूदासीनस्य परमात्मनः कथं जयशीलत्वमिति चेत् मैवम् प्रह्लादमार्कण्डेयादिभक्तगणानुग्रहार्थमिन्द्रादिदेवगणसंरक्षणार्थं स्वेच्छयैव हरिहरादिदिव्यमङ्गलविग्रहं स्वीकृतवतः मुरत्रिपुरादिमहासुरयुद्धे जयशीलत्वस्मरणात् । अश्वस्य सर्वलोकव्यापिनः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति श्रुतेः । वाजिनः वेगवतः । 'अपाणिपादो जवनो ग्रहीता' इति श्रुतेः । **सुरभि नो मुखाकरत्** । सः दधिक्रावा नः अस्माकम् मुखं सुरभि गन्धयुक्तं करत् करोतु । तत्त्वमस्यादिमहावाक्योत्थात्मविद्यया मां संतुष्टं करोत्वित्यर्थः । अत्रत्यमुखशब्देन वागिन्द्रियं लक्ष्यते । सुरभिशब्देन शुद्धिर्लक्ष्यते । तथाचास्माकं वाचं विशुद्धां करोत्वित्यर्थः । किञ्च मनोऽपि मुखशब्देन लक्ष्यते । विशुद्धवाचो विशुद्धमनसश्च स्तुतिकरणयोग्यता भवति । **प्र ण आयूँषि तारिषत्** । नः अस्माकमायूंषि प्रतारिषत्

प्रकृष्टानि निरुपद्रवाणि कुर्यात् । आयुषोऽभावे व्याध्यादिनोपद्रवसद्भावे च स्तोतुमशक्यत्वात्स्तोत्रोपयुक्तायुःप्रार्थनेऽपि न मुमुक्षुत्वहानिः । आपोहिष्ठादिमन्त्रस्य पूर्वमुक्तार्थत्वादत्र नार्थवर्णनं कृतमिति द्रष्टव्यम् । दधिक्रावृण्ण इति मन्त्रेण हृदयदेशे मार्जनमित्याचारनवनीतकारैरुक्तम् । तत्र प्रमाणं मृग्यम् ॥

प्रोक्षणानन्तरं प्रणवसहिताभिर्व्याहृतिभिरात्मानं परिषिच्य 'ऋतं च सत्यं चाभीद्धात्' इत्यादिना 'अन्तरिक्षमथो सुवः' इत्यन्तेन मन्त्रेण हस्तेऽभिमन्त्रितं जलमाघ्राय तज्जलं क्षितौ क्षिपेत् । तदुक्तं प्रजापतिना—'जलपूर्णं तथा हस्तं नासिकाग्रे समर्पयेत् । ऋतं चेति पठित्वा तु तज्जलं तु क्षितौ क्षिपेत् ॥' इति । अत्राघ्रातजलविसर्जनार्घ्यप्रदानयोर्मध्ये आचारनवनीतकारैराचमनमुक्तम् । तत्रापि प्रमाणं मृग्यम् ॥

ततः सूर्यायार्घ्यं निवेदयेत् । तदाह व्यासः—'कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् । आदित्याभिमुखस्तिष्ठन् त्रिरूर्ध्वमथ चोत्क्षिपेत् ॥' इति । शौनकोऽप्याह—'व्याहृत्या सह गायत्र्या संध्यां प्रत्यञ्जलिं क्षिपेत्' इति । अत्र हारीतोऽपि विशेषमाह—'सावित्र्याभिमन्त्रितमुदकं पुष्पमिश्रितमञ्जलिना क्षिपेत्' इति । अत्र शङ्खोऽप्याह—'सूर्यायैव तु गायत्र्या त्रिसंध्यं स्वाञ्जलिं क्षिपेत् । प्रातर्मध्याह्नयोस्तिष्ठन् सायमासीन एव वा ॥



मन्देहानां वधार्थाय प्रक्षिपेदुदकाञ्जलिम् । प्रायश्चित्तार्थमाचम्य मुच्यते दैत्यहत्यया ॥ प्रणवव्याहृतीभिश्च कृत्वात्मानं प्रदक्षिणम् । आचम्यैव ततस्तिष्ठन् ध्यायेत्संध्यां समाहितः ॥' इति । पारिजाते त्वभिहितम्—'ईषन्नम्रः प्रभाते तु मध्याह्ने तु ऋजुस्तथा । गायत्र्या प्रक्षिपेदर्घ्यं सायं तूपविशन्भुवि ॥ गोशृङ्गमात्रमुद्धृत्य रविं दृष्ट्वा जलाञ्जलिम् । द्वौ पादौ तु समौ कृत्वा पार्ष्णी उद्धृत्य प्रक्षिपेत् ॥' इति । संग्रहे त्वभिहितम्—'द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् । गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥ जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थलम् । संप्रोक्ष्य वारिणा सम्यक्ततोऽर्घ्याणि प्रदापयेत् ॥ मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत् । तर्जन्यङ्गुष्ठसंयोगो राक्षसी मुद्रिका स्मृता ॥ राक्षसीमुद्रिकादत्तं तत्तोयं रुधिरं भवेत् ॥' इति । अत्र जलाभाव इति वचनं गृहादिसंध्यावन्दनविषये वेदितव्यम् । अत्राह भरद्वाजः—'ततः प्रदक्षिणीकृत्य त्वद्भिः संप्रोक्षिते शुचौ । देशे च दर्भसंक्लृप्ते वाग्यतः प्राङ्मुखः स्थितः ॥ दर्भान्धारयमाणस्सन्नात्मनो ध्यानमाचरेत् । उपविश्य द्विराचम्य ग्रहादींस्तर्पयेत्ततः ॥' इति । ऋग्वेदिनां विशेष उक्तः—'प्रातर्मध्याह्नयोरप्सु सायंकाले भुवि क्षिपेत् । तिष्ठन्नर्घ्यत्रयं दद्यात् त्रिषु कालेषु बह्वृचः ॥' इति । नन्वेतावता ग्रन्थेन प्रातर्मध्याह्नयोस्तिष्ठन्नेव जल एवार्घ्यप्रदानं सूर्याय

कुर्यात्, सायं त्वासीन एव स्थल एवार्घ्यप्रदानं कुर्यादित्ययमर्थ उक्तो भवति । अस्मिन्नर्थे विरुद्धानि स्मृतिवचनानि दृश्यन्ते । तथाहि मुक्ताफलकारैः पितामहवचनमुदाहृतम्—‘उभाभ्यां तोयमादाय हस्ताभ्यां सुसमाहितः । गायत्र्या मन्त्रिता आपः ब्रह्मव्याहृतिपूर्वया ॥ रवेरभिमुखस्तिष्ठन् ऊर्ध्वं त्रिस्संध्ययोः क्षिपेत् ।’ इति । आपः अपः, संध्ययोः प्रातस्सायंसंध्ययोरित्यर्थः । स्मृतिसारसमुच्चयकारस्तु भारद्वाजवचनेन सायमासीनेनार्घ्यप्रक्षेपणं भुव्यर्घ्यप्रक्षेपणं च निषेधति—‘सायं प्रत्यङ्मुखासीना अर्घ्यप्रक्षेपणं भुवि । इति केचित्प्रकुर्वन्ति न कुर्युर्द्विजसत्तमाः ॥’ इति । सायं भूमावर्घ्यप्रक्षेपणे कृतेऽत्यन्तं बाधकमाह दक्षः—‘भुवि कुर्यात्तु यो मोहादर्घ्यप्रक्षेपणं द्विजः । सायंकाले स पापात्मा संयाति नरकायुतम् ॥ तिरूर्ध्वं संध्ययोः कुर्यादर्घ्यप्रक्षेपणं जले । अन्यथा कुरुते यस्तु ब्रह्महत्यां स विन्दति ॥’ इति । तथा च स्मृतिवचनानां परस्परविरुद्धत्वात् कथमनुष्ठानप्रकार इति चेदुच्यते । सायमासीनेन सूर्यार्घ्यदाने भुव्यर्घ्यदाने च ‘न कुर्युर्द्विजसत्तमा’ इति निषेधात् ‘स पापात्मा संयाति नरकायुतम्’ इति ‘ब्रह्महत्यां स विन्दति’ इति चात्यन्तबाधकस्मरणाच्च सायंकालेऽपि तिष्ठन्नेव जल एव सूर्यायार्घ्यप्रक्षेपणं कुर्यादिति प्रतिभाति । ननु सायंकाले भूमावर्घ्यप्रक्षेपणविधायकस्मृतिवचनानां का गति-



रिति चेत् उच्यते, तेषां वाजसनेयिपरत्वेन गत्युपपत्तेः । तदुक्तं देवलेन—‘सायंकाले प्रकुर्वन्ति ह्यर्घ्यप्रक्षेपणं द्विजाः । जलमध्ये त्वञ्जलिना विना वाजसनेयिनः ॥’ इति । तथा च वाजसनेयिव्यतिरिक्तास्त्रिष्वपि कालेषु तिष्ठन्नेव जल एव सूर्यायार्घ्यदानं कुर्युः । बह्वृचानां तु आचारनवनीते विशेषोऽभिहितः—‘प्रातर्मध्याह्नयोरप्सु सायंकाले भुवि क्षिपेत् । तिष्ठन्नर्घ्यत्रयं दद्यात् त्रिषु कालेषु बह्वृचः ॥’ इति । तस्मात्सूर्यायार्घ्यदाने द्विजानां शाखाभेदेन व्यवस्था द्रष्टव्येत्यलं विस्तरेण । जलाभावे कर्तव्यमाह विष्णुः—‘जलाभावे महामार्गे बन्धने त्वशुचावपि । उभयोः संध्ययोः काले रजसा वार्घ्यमुत्क्षिपेत् ॥ तदभावेऽपि सूर्यस्य ध्यानमेव समाचरेत् ।’ इति । काले मुख्यकाल इत्यर्थः । अर्घ्यदाने मन्त्रान्तरं यदुक्तं विष्णुना—‘कराभ्यामञ्जलिं कृत्वा जलपूर्णं समाहितः । उदुत्यमिति मन्त्रेण तत्तोयं च क्षिपेद्भुवि ॥’ इति तद्बहुस्मृतिविरोधाच्छ्रुतिविरोधादाचाराभावाच्च नादर्तव्यम् । अत्र संध्याविषये शातातप आह—‘दर्भहीना तु या संध्या यच्च दानं विनोदकम् । असंख्यातं तु यज्जप्तं तत्सर्वं स्यान्निरर्थकम् ॥ संध्यातिक्रमणे यस्य सप्तरात्रं गमिष्यति । उन्मत्तदोषयुक्तोऽपि पुनः संस्कारमर्हति ॥’ इति । एतत्सर्वात्मना संध्यानुष्ठानाकरणविषयम् । यथाकथञ्चिद्गौणकालेषु संध्याकर्मभावनायामप्यकृतायां

पूर्वोक्तं प्रायश्चित्तमिति ज्ञेयम् । नवग्रहादितर्पणानन्तरमा-
चम्य वन्दनं कृत्वा जपदेशं गत्वा जपं कुर्यात् ॥

अत्रायं संध्यानुष्ठानक्रमः ॥ शुचिरुपवीती बद्धशिखः
प्रक्षालितपाणिपादः द्विराचम्य दर्भपाणिः शुक्लाम्बरधर-
मिति विघ्नेशं ध्यात्वा प्राणायाममेकं कृत्वा ममोपात्त-
समस्तदुरितक्षयद्वारा परमेश्वरप्रीत्यर्थं प्रातस्संध्यामुपा-
सिष्य इति प्रातः संकल्प्य, मध्याह्ने माध्याह्निकसंध्या-
मुपासिष्य इति संकल्प्य, सायं सायंसंध्यामुपासिष्य
इति संकल्प्य, तीरे चेदासीनः, जले चेज्जानुदघ्नजले
स्थित्वा, वारिणा पुण्ड्रं धृत्वा वामपाणिना जलं स्पृशन्
आपोहिष्ठादिमन्त्रस्य सिंधुद्वीप ऋषिः, गायत्री छन्दः,
आपो देवता, प्रोक्षणे विनियोगः इति शिरआदिषु ऋष्या-
दीन्विन्यस्य आपोहिष्ठेत्यादिभिः सप्तभिः पादैः सप्रणवैः
सदर्भेण देवतीर्थेनापः स्पृष्ट्वा सप्त विप्रुषः शिरस्युत्क्षिप्याष्टमे-
नैकां विप्रुषं पादयोर्निक्षिप्य नवमेनैकां शिरस्युत्क्षिप्य सप्र-
णवव्याहृत्यात्मानं परिषिञ्चेत् । ततः प्रातःकाले सूर्यश्चे-
त्यनुवाकस्य अग्नि ऋषिः, गायत्री छन्दः, सूर्यो देवता,
अपां प्राशने विनियोगः इति शिरआदिषु ऋष्यादी-
न्विन्यस्य मन्त्रार्थस्मरणपूर्वकमभिमन्त्रिता अपः पिबेत् ।
मध्याह्ने आपः पुनन्त्वित्यनुवाकस्य विश्वेदेवा ऋषयः,
अनुष्टुप्छन्दः, आपो देवता, अपां प्राशने विनियोग



इति शिरआदिष्वृष्यादीन्विन्यस्य मन्त्रार्थस्मरणपूर्वकमभिम-
न्त्रिता अपः पिबेत् । सायम् अग्निश्चेत्यनुवाकस्य सूर्य
ऋषिः, गायत्री छन्दः, अग्निर्देवता, अपां प्राशने
विनियोगः इति शिरआदिष्वृष्यादीन्विन्यस्य मन्त्रार्थ-
स्मरणपूर्वकमभिमन्त्रिता अपः पिबेत् । अनन्तरं त्रिष्वपि
संधिष्वप्प्राशनानन्तरं द्विराचम्य अनन्तरं दधिक्राव्ण
इति सुरभिमत्या ऋचः वामदेव ऋषिः, अनुष्टुप् छन्दः,
विश्वेदेवा देवताः, प्रोक्षणे विनियोग इति शिरआदि-
ष्वृष्यादीन्विन्यस्य मन्त्रार्थस्मरणपूर्वकं सुरभिमत्या ऋचा
आपोहिष्ठादिभिश्च तिसृभिः ऋग्भिः पूर्ववत्पादशो मार्ज-
यित्वात्मानं सप्रणवव्याहृत्या पूर्ववत्परिषिच्य ततः परम्
अर्घ्यप्रदानं करिष्य इति संकल्प्यार्घ्यं सूर्याय दद्यात् ।
केचित्तु ऋतं च सत्यं चाभीद्धादित्यादिना 'अन्तरिक्षमथो
सुवः' इत्यन्तेन मन्त्रेण हस्तेऽभिमन्त्रितं जलमाघ्राय जले
क्षितौ वोत्सृज्य ततः परमर्घ्यप्रदानं कुर्वन्ति । कुर्वन्तु
नाम तत्रापि प्रमाणसद्भावात् । अर्घ्यप्रदानं करिष्य इति
सङ्कल्प्यानन्तरम् अर्घ्यप्रदानमन्त्रस्य विश्वामित्रो भग-
वानृषिः, गायत्री छन्दः, सविता परमात्मा देवता,
तत्सवितुर्वरेण्यमिति बीजम्, भर्गो देवस्य धीमहीति
शक्तिः, धियो यो नः प्रचोदयादिति कीलकम्, मम
समस्तपापक्षयार्थेऽर्घ्यप्रदाने विनियोगः, तत्सवितुरकु-

ष्ठाभ्यां नमः, वरेण्यं तर्जनीभ्यां स्वाहा, भर्गो देवस्य मध्यमाभ्यां वषट्, धीमह्यनामिकाभ्यां हुम्, धियो यो नः कनिष्ठिकाभ्यां वौषट्, प्रचोदयात् करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्—वेदसारं परं ज्योतिर्मूलभूतं परात्परम् । हृदिस्थं सर्वभूतानां मण्डलान्तर्व्यवस्थितम् ॥ वज्रायुधसहस्रस्य सकृत्संधानकारणम् । चिन्तयन्परमात्मानमप ऊर्ध्वं विनिक्षिपेत् ॥' एवमादित्यमण्डलान्तरवस्थितपरमात्मध्यानपुरस्सरमादित्याभिमुखो ध्यात्वा अर्घ्यप्रदानं कुर्यात् । तत्र प्रातस्तिष्ठन् द्वौ पादौ समौ कृत्वा कराभ्यां तोयमादायाङ्गुष्ठौ मुक्त्वा प्रणवव्याहृतिसहितया गायत्र्याभिमन्त्रितं जलाञ्जलिं सूर्येणोदयास्तमययोर्युध्यमानानां मन्देहाभिधानां रक्षसां निरासाय ईषन्नम्रः उद्धृतपार्ष्णिः गोशृङ्गमात्रमूर्ध्वमर्घ्यमुद्धृत्य त्रिवारं जलमध्ये प्राक्षिपेत् । जलाभावे शुद्धप्रदेशे प्राक्षिपेत् । ततो दैत्यहत्याविमोचनार्थम् आचम्य प्राणायाममेकं कृत्वा अनन्तरं मुख्यकालातिक्रमप्रायश्चित्तार्थमर्घ्यप्रदानं करिष्य इति संकल्प्य व्याहृतिसंपुटितया गायत्र्या चतुर्थमर्घ्यं दत्वा ततः सजलेन पाणिना सप्रणवव्याहृतिभिरात्मानं परिषिञ्चन् सकृत्प्रदक्षिणं कृत्वा प्राणायाममेकं कृत्वा संध्योपासनं कुर्यात् । तत्र प्रातःकाले गायत्रीनामरक्तवर्णब्रह्मरूपोपेत-



संध्यारूप आदित्य इति चिन्तनं कृत्वा, मध्याह्ने सावित्रीनामशुक्लवर्णरुद्ररूपोपेतसंध्यारूप आदित्य इति चिन्तनं कृत्वा, सायंकाले सरस्वतीनामकृष्णवर्णविष्णुरूपोपेतसंध्यारूप आदित्य इति चिन्तनं कृत्वा, अनन्तरं त्रिष्वपि कालेषु 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति श्रुत्या तमादित्यं परब्रह्मत्वेन ज्ञात्वा तदेव सत्यज्ञानानन्दानन्तलक्षणं सर्वप्राण्यात्मभूतं परं ब्रह्माहमस्मीति प्रत्यग्ब्रह्मणोस्तत्त्वंपदलक्ष्ययोः ऐक्यानुसंधानरूपं संध्योपासनं कर्तव्यं विवेकिभिः । इदमेव मुख्यमुपासनम् । एतादृशानुसंधानाशक्तौ सत्यां पूर्वोक्तरीत्या प्रातःकालादिभेदेन गायत्र्यादिनामरक्तादिवर्णब्रह्मादिरूपोपेतसंध्यारूपत्वेनादित्यं विचिन्त्य तमादित्यं 'असावादित्यो ब्रह्म' इति श्रुतिवाक्यात्परब्रह्मत्वेन विचिन्त्य तद्ब्रह्मैवाहमस्मीति चिन्तनरूपमहंग्रहोपासनं कुर्यात् । एवं वा । गायत्रीनामकसंध्यां प्रकृत्य साहमस्मीत्युपासीतेति याज्ञवल्क्यस्मरणाच्च पूर्वोक्तरीत्या प्रातःकालादिभेदेन गायत्र्यादिनामरक्तादिवर्णब्रह्मादिरूपोपेतां संध्यामादित्यत्वेन विचिन्त्यानन्तरमादित्यत्वेन चिन्तितां तां परब्रह्मत्वेन विचिन्त्य ततः परं या परब्रह्मात्मिका संध्या साहमस्मीति चिन्तनरूपमहंग्रहोपासनं कुर्यात् । उपासनं तु 'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्' इत्यारभ्य य एवं वेदेत्यन्तं मन्त्रमुच्चार्य असावादित्यो ब्रह्मैवाहमस्मीति चोच्चार्य तदर्थस्मरणपूर्वकं

कर्तव्यम् । एवमुपासनं कृत्वा हस्ताभ्यां हृदयमभिमृश्य द्विराचम्य नवग्रहतर्पणं केशवादितर्पणं यमतर्पणं च कृत्वाचम्य वन्दनं कृत्वाचम्य जपं कर्तुं योग्यदेशं गच्छेदिति ॥

मध्याह्नसायंकालयोरर्घ्यदाने विशेषोऽस्ति । मध्याह्ने तिष्ठन् ऋजुकायस्सन्नर्घ्यं जल एव प्रक्षिपेत् । तत्रापि 'एकमर्घ्यं प्रदातव्यं मध्याह्ने भास्करं प्रति' इति स्मरणात् आदावेकमर्घ्यं प्रायश्चित्तार्थमेकमर्घ्यमाहत्यार्घ्यद्वयमेव जले प्रक्षिपेत् । सायं पश्चिमाभिमुखस्तिष्ठन् प्रायश्चित्तार्घ्येण साकमर्घ्यचतुष्टयं जले प्रक्षिपेत् । अत्र केचिदाहुः—सायमासीनः जलेऽर्घ्यं प्रक्षिपेदिति । तत्र बाधकस्मरणात्तदनादर्तव्यम् । केचित्तु मध्याह्ने पूर्वमर्घ्यद्वयं कुर्वन्ति तस्य मूलं मृग्यम् । प्रातःकाले सायंकाले चार्घ्यत्रयप्रदानस्य प्रयोजनमुक्तमन्यत्र—'एकं वाहननाशाय द्वितीयं शस्त्रनाशकम् । असुराणां वधायैकं तस्मादर्घ्यत्रयं त्यजेत् ॥' इति ।

किंच वसिष्ठविश्वामित्रकल्पादावर्घ्यप्रदानमारभ्याधिकानि कानिचित् ब्रह्मास्त्रप्रयोगतदुपसंहारादीनि कर्तव्यत्वेनाभिहितानि । तदेकदेशान् शिष्टजनानामनुष्ठानार्थमत्र पूर्वोक्तप्रयोगक्रमे मध्ये मध्ये ग्रथितान् कृत्वा प्रदर्शयामः ॥ तथाहि अर्घ्यप्रदानार्थं कराभ्यां जलमादाय प्रणवव्याहृतिसहितगायत्र्युच्चारणपूर्वकं 'घृणिस्सूर्य आदित्योम्' इत्युक्त्वा प्रथमार्घ्यं दत्वानन्तरं पूर्ववत् गायत्र्युच्चारणपूर्वकं परो रजसे सावदोमित्युक्त्वा द्वितीयमर्घ्यं दत्वा ततः परं प्रणवव्याहृतिसहितगायत्र्युच्चारणपूर्वकं 'ब्रह्मात्मकाय विद्महे हिरण्यगर्भाय धीमहि तन्नो ब्रह्म प्रचोदयात् ऐं सूर्याय नमः' इत्युक्त्वा ब्रह्मास्त्ररूपं तृतीयमर्घ्यं दत्वानन्तरं दैत्यहत्याप्रायश्चित्तार्थमाचम्य प्राणानायम्य 'कालातिक्रमणप्रायश्चित्तार्घ्यं करिष्ये' इति संकल्प्य 'यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य सर्वं तदिन्द्र ते वशे' इत्युक्त्वा व्याहृतिसंपुटितगायत्र्यार्घ्यमेकं दत्वानन्तरमस्त्रोपसंहारमन्त्रस्य सवितृभगवान्नारायण ऋषिः, अनुष्टुप् छन्दः, श्रीसूर्यनारायणो देवता, अस्त्रोपसंहारे विनियोगः, अघोरास्त्राय अङ्गुष्ठाभ्यां नमः, शार्ङ्गाय तर्जनीभ्यां स्वाहा, चक्राय मध्यमाभ्यां वषट्, अघोरास्त्राय अनामिकाभ्यां हुम्, शार्ङ्गाय कनिष्ठिकाभ्यां वौषट्, चक्राय करतलकरपृष्ठाभ्यां फट्, एवं हृदयादिन्यासः, भूर्भुवस्सुवरोमिति दिग्बन्धः, ध्यानं—सोऽहमर्कः परं ज्योतिरर्कज्योतिरहं शिवः । आत्मज्योतिरहं सूर्यः सर्वज्योतिरसावहोम् ॥ आवायव्ययावायव्या व्यायवाया व्ययवाआ । औवायव्यया वायव्या व्यायवायाव्ययवाऔ ॥ हरोऽसि पाप्मानं मे विद्धि । संवर्गोऽसि पाप्मानं मे विद्धि । उद्गर्गोऽसि पाप्मानं मे विद्धि । यादचोग्रणयोयोधि हिमधीस्यवदेर्गोभ यंणिरे-

र्वतुविसतत् वस्सुवर्भुभू ओम् । आगच्छ वरदे देवि गायत्रि ब्रह्मरूपिणि । जपानुष्ठानसिद्ध्यर्थं रमस्व हृदये मम ॥ एवमस्त्रोपसंहारं कृत्वा सजलेन पाणिना प्रणवसहितव्याहृतिभिरात्मानं परिषिञ्चन् सकृत्प्रदक्षिणं कृत्वा प्राणायाममेकं कृत्वा पूर्वोक्तरीत्या संध्योपास्तिं कृत्वा हस्ताभ्यां हृदयमभिमृश्य द्विराचम्य ग्रहादितर्पणं कृत्वाचम्य वन्दनं कर्तव्यम् । अस्य श्रीवन्दनमहामन्त्रस्य सान्दीपिनिः भगवानृषिः, अनुष्टुप् छन्दः, संध्यादेवी देवता, वन्दने विनियोगः । अं ऐं बीजम्, उं क्लीं शक्तिः, मं सौः कीलकम्, मम संध्यादेवीप्रसादसिद्ध्यर्थे जपे विनियोगः । अं ऐं अङ्गुष्ठाभ्यां नमः । उं क्लीं तर्जनीभ्यां स्वाहा । मं सौः मध्यमाभ्यां वषट् । अं ऐमनामिकाभ्यां हुम् । उं क्लीं कनिष्ठिकाभ्यां वौषट् । मं सौः करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्—कृत्वा संध्यामभिध्यायेन्नीलग्रीवां सुशोभनाम् । वरदाभयहस्तां तां त्रिणेत्रां चन्द्रशेखराम् ॥ एवं ध्यात्वा पञ्चपूजां कृत्वा मूलमन्त्रं जपेत् । अं ऐं उं क्लीं मं सौः एवं षोडशवारं जपित्वा द्वात्रिंशद्वारं षोडशवारं वा प्रणवं जपित्वा, 'प्रणवं परमात्मानं जप्त्वा भक्तिसमन्वितः । स्वात्मानं त्वामभिध्यायन्प्रकुर्याद्वन्दनं बुधः ॥



संध्ये देवि महाभागे सर्वदेवनमस्कृते । त्वदुपासनमन्त्रेण सर्वपापैः प्रमुच्यते ॥ या संध्या सा जगद्रूपा मायातीता विनिश्चला । ईश्वरी केवला शक्तिर्मूर्तित्रयसमुद्भवा ॥ अहो महाब्रह्मरूपे दिव्ये संध्ये सरस्वति । अजरे अमरे देवि ब्रह्मयोनि नमोऽस्तु ते ॥' एवं वन्दनं कृत्वा, 'ज्योतिर्मण्डलनाराचं लिङ्गं पद्मं तथैव च । सुरभिं योनिमुद्रां च संध्यायां दर्शयेद्बुधः ॥' इति मुद्रां दर्शयित्वाचम्य जपं कर्तुं योग्यदेशं गच्छेत् ॥

इति श्रीमत्सज्जनबृन्दचरणारविन्दनिषेविवेदान्तिसीतारामशास्त्रिविरचितायामनुष्ठानप्रकाशिकायां चतुर्थोऽशः समाप्तः ॥

ओं पूर्वं प्रथमांशे ब्राह्ममुहूर्तमारभ्य दन्तधावनपर्यन्तमनुष्ठानप्रकार उक्तः । द्वितीयांशे नित्यनैमित्तिकस्नानानुष्ठानप्रकार उक्तः । तृतीयांशे काम्यस्नानमारभ्य पुण्ड्रधारणपर्यन्तमनुष्ठानप्रकार उक्तः । चतुर्थांशे संध्यावन्दनानुष्ठानप्रकार आपोहिष्ठादिमन्त्राद्यर्थवर्णनपूर्वकं सम्यगुक्तः । इदानीं पञ्चमांशे जपानुष्ठानप्रकारः गायत्र्याद्यर्थवर्णनं सम्यगभिधीयते ।

पूर्वत्र जपं कर्तुं योग्यदेशं गच्छेदिति चतुर्थांशावसानेऽभिहितम् । स च योग्यदेशः कुत्र वर्तत इत्याकाङ्क्षायां योग्यं जपदेशमाह योगयाज्ञवल्क्यः—'अग्न्यगारे जलान्ते वा जपेद्देवालयेऽपि वा । पुण्यतीर्थे गवां गोष्ठे सिद्धक्षेत्रेऽथवा

गृहे ॥' इति । अग्न्यगार इत्याहिताग्निविषयम् । जलान्तं जलतीरम् । पुण्यैः पुरुषैः सेवितं पुण्यतीर्थम् । सिद्धक्षेत्रं गायत्रीशिलादि । गृह इत्यातुरविषयम् । स्मृतिरत्नेऽभिहितं—'सूर्याग्निरुद्रदेवानां गुरूणामपि संनिधौ । अन्येषां च प्रसिद्धानां मन्त्रानभिमुखो जपेत् ॥ अश्वत्थबिल्वतुलसीवनपुष्पान्तरावृतः ॥' इति । स्मृतिसारे त्वभिहितम्—'सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च जलस्य च । विप्राणां च गवां चैव संनिधौ शस्यते जपः ॥' इति । देशतारतम्येन फलमाह शङ्खः—'गृहे त्वेकगुणं प्रोक्तं नद्यादौ द्विगुणं स्मृतम् । गवां गोष्ठे दशगुणमग्न्यगारे शताधिकम् ॥ सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च संनिधौ । सहस्रं शतकोटीनामनन्तं विष्णुसंनिधौ ॥' इति । अत्राङ्गिरा आह—'प्रच्छन्नानि च दानानि ज्ञानं च निरहंकृतम् । जप्यानि च सुगुप्तानि तेषां फलमनन्तकम् ॥' इति । जपारम्भे कर्तव्यमाह शौनकः—'आब्रह्मलोकादाशेषादालोकालोकपर्वतात् । ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमो नमः ॥ इति मन्त्रं समुच्चार्य नमस्कुर्यात्सुरान्द्विजान् ।' इति । नमस्कारानन्तरं कर्तव्यमाह स एव—'अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया ॥' इति । अनेन मन्त्रेण जपस्थल आसीनः शिवं ध्यायन् भूतोच्चाटनार्थं भूमौ खातत्रयं कार्यमित्याह



स एव—'तलेन वामपादस्य भूमौ खातत्रयं चरेत्' इति । बाधकभूतानामेवोच्चाटनं नतु भूमिधारकाणामित्याह स एव—'उग्रभूतपिशाचाद्या ये च वै भूमिधारकाः । एतेषामविरोधेन ब्रह्मकर्म समारभे ॥ संकल्प्यैवं जपेत्सम्यङ् मन्त्रार्थगतमानसः । कुशाजिनाम्बरेणाढ्यं कल्पयेदासनं बुधः ॥ वंशेष्टकामृद्धरणीतृणपल्लवनिर्मितम् । वर्जयेदासनं धीमान्दारिद्र्यव्याधिदुःखदम् ॥ सर्वसिद्ध्यै व्याघ्रचर्म ज्ञानसिद्ध्यै मृगाजिनम् । नादीक्षितस्य गृहिणः कृष्णसाराजिनं स्मृतम् ॥ विशेद्यतिर्वनस्थश्च ब्रह्मचारी मृगाजिने । वस्त्रासनं रोगहरं कम्बलं दुःखमोचनम् ॥' इति । कुशाद्यासनेषु स्वस्तिकाद्यासनेन स्थातव्यमित्याह स एव—'स्वस्तिकाद्यासनेनाथ विशेत्तत्र निराकुलः । वीरासनं स्वस्तिकं वा बद्ध्वान्यतरदासनम् ॥ पद्मं मुक्तासनं वापि बद्ध्वा जपमथाचरेत् ।' इति । आसनलक्षणमाह स एव—'एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितः । पादेऽन्यस्मिंस्तथा चोरुं वीरासनमुदाहृतम् ॥ जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे । ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥ ऊर्वोरुपरि विप्रेन्द्रः कृत्वा पादतले उभे । पद्मासनं वदेदेतत्सर्वेषामपि पूजितम् ॥ संपीड्य सीविनीं सूक्ष्मां गुल्फेनैव तु संयुतः । सव्यं दक्षिणगुल्फेन मुक्तासनमुदीरितम् ॥ एवमासनयुक्तः सन् भूत-

शुद्धिं समाचरेत् ॥' इति । उक्तेष्वासनेषु स्वस्तिकासनमेव शिष्टैरङ्गीकृतम् । कुशाजिनाम्बरेणाढ्यमित्यासनत्रयमुक्तम् । तत्राधस्तात्कुशास्तदुपर्यजिनं तदुपरि चेलं च कृत्वा कुशाद्यासनमभिमन्त्रयेत् । तदुक्तं मन्त्रदेवताप्रकाशिकायां—'पृथिव्या मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसने विनियोगः । पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥' इति । एवमासनं परिकल्प्य विघ्नेश्वरध्यानपुरस्सरं प्राणायामं कृत्वा त्रिष्वपि कालेषु तत्तत्संध्यागायत्रीजपं करिष्य इति संकल्प्यातः परं प्राणायामैस्त्रिभिः पूतो गायत्रीं तु जपेत्तत इति संवर्तस्मरणाद्गायत्रीजपाङ्गभूतप्राणायामघटकीभूतप्रणवस्य ऋष्यादीन्संन्यसेत् । ऋष्यादिकमाह भरद्वाजः—'प्रणवस्य ऋषिर्ब्रह्म परमात्मा च देवता । छन्दस्तु देवीगायत्री विनियोगः क्रियावशः ॥' इति । प्राणायामघटकीभूतव्याहृतीनामृष्यादिकमाह पितामहः—'अत्रिर्भृगुश्च कुत्सश्च वसिष्ठो गौतमस्तथा । काश्यपश्चाङ्गिराश्चैव ऋषयः स्युर्यथाक्रमम् ॥ गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च । त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै ॥ अग्निर्वायुस्तथार्कश्च वागीशो वरुणस्तथा । इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ॥' इति । तद्घटकीभूतगायत्र्यास्तच्छिरसश्च ऋष्यादिकमाह स एव—



'विश्वामित्रस्तु गायत्र्या ऋषिश्छन्दस्स्वयं स्मृतम् । सविता देवता चैव ब्रह्मा शिरऋषिः स्मृतः ॥ अनुष्टुबेव छन्दः स्यात्परमात्मा च देवता ॥' इति । प्राणायामलक्षणमाह मनुः—'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥' इति । अत्र पठनं मनसैव नतु वाचा । अत एवाह संवर्तः—'प्रणवेन तु संयुक्ता व्याहृतीः सप्त नित्यशः । गायत्रीं शिरसा सार्धं मनसा त्रिः पठेद्द्विजः ॥' इति । याज्ञवल्क्योऽपि तल्लक्षणमाह—'गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्वकम् ॥ प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥' इति । अस्यार्थ उक्तो विज्ञानेश्वरेण—'प्रतिव्याहृति प्रणवेन संयुक्तां मुखनासिकासंचारिणं वायुं निरुन्धन्मनसा त्रिर्जपेदिति अयं सर्वत्र प्राणायाम' इति । यमोऽपि तल्लक्षणमाह—'ओङ्कारपूर्विकास्सप्त जपेत्तु व्याहृतीस्तथा । शिरसा सह गायत्रीं प्राणायामः परं तपः ॥' इति । गायत्र्या आदावन्ते च प्राणायामत्रयं कर्तव्यमित्युक्तं कर्मप्रदीपे—'आदावन्ते च गायत्र्याः प्राणायामत्रयं स्मृतम् । संध्यायामर्घ्यदाने च स्मृत एकोऽसुसंयमः ॥' इति । प्राणायामप्रकार उक्तस्तत्रैव—'अङ्गुष्ठानामिकाभ्यां तु तथैव च कनिष्ठया । प्राणायामस्तु कर्तव्यो मध्यमां तर्जनीं विना ॥ तर्जनीमध्ययोर्योगं प्राणायामे तु वर्जयेत् । तर्जनीं मध्यमां स्पृष्ट्वा कुर्वञ्छूद्रसमो

भवेत् ॥' इति । प्राणायामगणनं वामहस्तेन कार्यमित्युक्तं तत्रैव—'वामहस्तेन गणयन् प्राणायामं जपेद्द्विजः' इति । प्राणायामशब्दार्थमाह नारदः—'प्राणो वायुश्शरीरस्थ आयामस्तस्य निग्रहः । प्राणायाम इति प्रोक्तो द्विविधः प्रोच्यते हि सः ॥ अगर्भश्च सगर्भश्च द्वितीयस्तु तयोर्वरः । अपि ध्यानं विनाऽगर्भस्सगर्भस्तत्समन्वितः ॥' इति । अत्राह भरद्वाजः—'समाहितमनाः प्राणानायम्यैव तदाकृतिम् । दशकृत्वो जपित्वैवं प्राग्गायत्रीं ततो जपेत् ॥ जपक्रमोऽयमेवं स्यात्सर्वपापप्रणाशनः ।' इति । तदाकृतिं कुम्भकरूपामित्यर्थः । तथाचायतप्राणस्सन् मनसाक्षरानुपूर्वीं स्मरन्वामहस्तेन गणयन् कुम्भकेनैव प्रथमे प्राणायामे त्रिः, द्वितीये चतुः, तृतीये त्रिरिति क्रमेण प्राणायामत्रयेऽपि यथा दशकृत्वः स्यात् तथा गायत्र्याद्यन्तयोर्विहितं प्राणसंयमं कुर्यादिति स्थितिः । कुम्भकप्राणायामं कर्तुमशक्तस्य जपमाह भारद्वाजः—'अशक्यः स्याद्यदि प्रोक्तः प्राणायामो द्विजन्मनः । बालस्य चेतरेषां च दशकृत्वो जपः स्मृतः ॥' इति । दशकृत्व इति विधानान्मध्यमे प्राणायामे चतुरावृत्तिर्जपः । आद्यन्तयोस्त्रिरावृत्तिः । आहत्य दशकृत्व इत्यर्थः । अत्यन्ताशक्तौ स एवाह—'सप्तैव व्याहृतीरेताः केवला वा जपेदिति ।' यत्तु कैश्चिद्वचनैः रेचकपूरककुम्भकात्मकत्वेन प्राणायामविधानं तद्योगनिष्ठविषयम् ।



तदाहात्रिः—'शनैर्नासापुटाद्वायुमुत्सृजेन्न तु वेगतः । न कम्पयेच्छरीरं तु स योगी परमो मतः ॥' इति । तदाह व्यासोऽपि—'नाभिमध्ये स्थितं ध्यायेत्कं रक्तं पूरकेण तु । नीलोत्पलाभं हृत्पद्मे कुम्भकेन जनार्दनम् ॥ ललाटस्थं शिवं श्वेतं रेचकेनाभिचिन्तयेत् । शुद्धस्फटिकसङ्काशं निर्मलं पापनाशनम् ॥' इति । योगयाज्ञवल्क्योऽप्याह—'पूरके विष्णुसायुज्यं कुम्भके ब्रह्मणः पदम् । रेचकेन तृतीयेन प्राप्नुयादैश्वरं पदम् ॥' अत एव तत्र योगशास्त्रनिष्ठविषयत्वमवसीयते । इत्यलं प्रसङ्गेन । इदानीं प्रकृतमनुसरामः । 'बद्ध्वासनं नियम्यासून् स्मृत्वा चात्मादिकं ततः । सनिमीलितदृङ्मौनी प्राणायामं समभ्यसेत् ॥' इति योगयाज्ञवल्क्यस्मरणात् आसीन एव त्रिष्वपि कालेषु प्राणायामाः कार्या इति मुक्ताफलकाराणामभिप्रायः । नवनीतकारास्तु—'आसीनस्तु भवेत्सायं मध्याह्ने स्थित एव च । तिष्ठन्नेव तथा कुर्यात्प्रातःकाले समाहितः ॥' इति दक्षवचनं, 'प्रातस्तिष्ठन् प्राणायामेन शुध्यति, सायमासीन' इत्यखण्डादर्शवचनं चानुसृत्य प्रातर्मध्याह्नयोस्तिष्ठतैव प्राणायामाः कार्याः सायमासीनेनैवेति सिद्धान्त इति प्राहुः । केचित्तु तदेवानुसृत्य बद्ध्वासनमिति स्मरणं सायंकालविषयमित्याहुः । अन्ये तु प्रातर्मध्याह्नयोस्तिष्ठन् प्राणायामविधिः 'असावादित्यो ब्रह्म' इति ध्यानात् पूर्वं कर्तव्यप्राणायामविषय इत्याहुः ॥

वस्तुतस्तु मुक्ताफलकारपक्ष एवोचित इति प्रतिभाति । यथोचितमत्र ग्राह्यम् । सर्वोक्तरीत्या प्राणायामत्रयं कृत्वा गायत्रीमावाहयेत् । 'आयात्वित्यनुवाकेन हृदये वार्कमण्डले । देवीमावाह्य गायत्रीं ततो ध्यायेद् द्विजोत्तमः ॥' इति । तस्य ऋष्यादीनाह पितामहः—'आयात्वित्यनुवाकस्य वामदेव ऋषिः स्मृतः । छन्दोऽनुष्टुब्भवेदस्य गायत्री देवता स्मृता ॥ अनेन चानुवाकेन त्वावाह्य तु यथाविधि । गायत्रीं विमलां देवीं हृदि वा सूर्यमण्डले ॥ ध्यानयोगेन संपश्येद्वर्णरूपसमन्विताम् ।' इति । तत्राह व्यासः— 'आवाहयेत्तु गायत्रीं सर्वपापप्रणाशिनीम् । आगच्छ वरदे देवि जप्तुर्मे संनिधौ भवेः ॥ गायन्तं त्रायसे यन्मां गायत्री त्वं ततः स्मृता ।' इति । गायत्र्या ऋष्यादीनाह व्यासः— 'विश्वामित्र ऋषिश्छन्दो निचृद्गायत्रमुच्यते । देवता परमात्मा च सविता वा प्रकीर्तितः ॥ प्राणायामे जपे त्वर्घ्यदाने च विनियुज्यते ।' इति । अर्घ्यकालेऽर्घ्यदाने विनियोगः, प्राणायामकाले प्राणायामे विनियोगः, जपकाले जपे विनियोग इति विवेकः ॥

इदानीं प्रणवादिव्याहृतीनामर्थः कथ्यते । ओमिति प्रणवस्य, अकारोकारमकारात्मकस्य ब्रह्माविष्णुमहेश्वरात्मकं निखिलजगज्जन्मस्थितिलयकारणं परं ब्रह्मैवार्थः । भूरादीनां सप्तानां व्याहृतीनां भूप्रभृतयः सप्तोर्ध्वलोका अर्थाः । ननु



व्याहृतीनां प्रत्येकं प्रणवेन सहोच्चारणं किमर्थमिति चेन्मैवम् प्रणवार्थभूतेन परेण ब्रह्मणा भूरित्यादिव्याहृत्यर्थानां लोकानां अभिन्नत्वं वक्तुं तेषां भूरादिव्याहृतीनां प्रत्येकं प्रणवेन सहोच्चारणमिति ज्ञेयम् । ननु कथं ब्रह्माभिन्नत्वं लोकानां स्यादिति चेत् उच्यते सर्वस्य जगतः ब्रह्मोपादानकत्वात् लोकानामपि जगदन्तर्भूतत्वेन ब्रह्मकार्यत्वात्तदनन्यत्वमारम्भणशब्दादिभ्य इत्यधिकरणन्यायेन कार्यस्योपादानात्मकत्वाल्लोकानां स्वोपादानभूतब्रह्मात्मकत्वमिति स्थितिः । प्राणायामघटकीभूतप्रणवव्याहृत्यर्थ उक्तः ॥

इदानीं तद्घटकीभूतगायत्र्या अर्थ उच्यते । यः सर्वजगदन्तर्यामी 'यस्सर्वाणि भूतान्यन्तरो यमयति' इति श्रुतिसिद्धः नः तत्तदन्तःकरणाद्युपाधिभेदभिन्नानां जीवानामस्माकं धियः धीवृत्तीः तत्तत्प्राणिकर्मसापेक्षः सन् स्वर्गादिसाधनकाम्यकर्माद्यनुष्ठानेषु तत्त्वसाक्षात्कारं प्रति बहिरङ्गसाधननिष्कामकर्मानुष्ठानेष्वन्तरङ्गसाधनेषु श्रुत्यन्तश्रवणतदर्थमनननिदिध्यासनेषु च प्रचोदयात् प्रेरयति । 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत' इति श्रुतेः । तस्य बुद्ध्यादिप्रेरकस्य सवितुः सर्वजगत्प्रसवितुः 'जन्माद्यस्य यत' इत्यधिकरणन्यायेन सर्वजगत्कारणस्य देवस्य द्योतनस्वभावस्य 'तमेव भान्तमनुभाति सर्वं

तस्य भासा सर्वमिदं विभाति' इति श्रुत्या चराचरात्मकसर्वजगदवभासकस्य वरेण्यं वरणीयं सर्वैरपि मुमुक्षुभिः प्रार्थनीयं शुद्धसत्त्वप्रधानमायोपाधिविनिर्मुक्तपारमार्थिकस्वरूपमखण्डसच्चिदानन्दलक्षणं कालतो देशतो वस्तुतश्चापरिच्छिन्नं तत्पदलक्ष्यं भर्गः अत्रत्यभर्गश्शब्दः सकारान्तः, भ्रस्ज दाह इत्यस्माद्धातोः स्वसाक्षात्कारेणानादिजन्ममरणपरम्परारूपं संसारबीजभूतमूलाज्ञानदाहकं स्वयंज्योतिर्निर्गुणं ब्रह्म धीमहि स्थूलसूक्ष्मकारणाख्यशरीरत्रयाविनिर्मुक्तप्रत्यगात्मत्वेन ध्यायाम इति निष्कृष्टोऽर्थः । स्मृतिभास्करे त्वेवमभिहितं—'तदित्येतत्परं ब्रह्म ध्येयं तत्सूर्यमण्डले । सवितुः सकलोत्पत्तिस्थितिसंहारकारिणः ॥ वरेण्यमाश्रयणीयं यदाधारमिदं जगत् । भर्गः स्वसाक्षात्कारेणाविद्याकार्यदाहकम् ॥ देवस्य ज्ञानरूपस्य स्वानन्दात्क्रीडतोऽपि वा । धीमह्यहं स एवेति तेनैवाभेदसिद्धये ॥ धियोऽन्तःकरणवृत्तीः प्रत्यक्प्रवणकारिणीः । य इत्यरूपमव्यक्तं सत्यज्ञानादिलक्षणम् ॥ नो अस्माकं बहुधाध्यस्तभेदेनानेन देहिनाम् । प्रचोदयात्प्रेरयति सत्यज्ञानादिलक्षणः ॥' इति । विश्वामित्रस्त्वेवमाह—'देवस्य सवितुस्तस्य धियो यो नः प्रचोदयात् । भर्गो वरेण्यं तद्ब्रह्म धीमहीत्यर्थ उच्यते ॥' इति । अगस्त्यस्त्वेवमाह—'यो देवस्सवितास्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे ॥' इति । मन्त्रप्रदीपिकायां त्वेव-



मुक्तं—'देवस्य सवितुस्तेजो वरेण्यं भर्गसंज्ञितम् । ध्यायेमहीति शब्दोक्तौ धीमहीत्यर्थ उच्यते ॥ यश्शब्दश्च यदित्यर्थे लिङ्गव्यत्ययतो भवेत् ॥' इति । मार्कण्डेयस्त्वेवमाह—'कुशबृस्यां निविष्टस्तु कुशपाणिर्जितेन्द्रियः । अर्कमध्यगतं ध्यायेत् पुरुषं तु महाद्युतिम् ॥' इति । निरुक्तभाष्ये त्वेवमभिहितं—'यद्ब्रह्म नित्यं हृदि संनिविष्टं मां प्रेरयत्तिष्ठति नः सुबुद्धीः । भर्गस्तदाख्यं भजनीयमेतत् ध्यायामि नित्यं रविमण्डलस्थम् ॥' इति । गायत्र्यर्थ उक्तः ॥

इदानीं प्राणायामघटकीभूतगायत्रीशिरसोऽर्थः कथ्यते । ओमित्युक्तार्थः । आप्नोतीति आपः अखण्डसत्तास्वरूपेण सर्वव्यापकः स एव ज्योतिः स्वयंप्रकाशचैतन्यज्योतिः रसः 'रसो वै स' इति श्रुत्या आनन्दस्वभावः अमृतम् अमरणधर्मं ब्रह्म देशाद्यनवच्छिन्नम् । एवंभूतस्यार्थस्य व्याहृतित्रयार्थेनैक्यमुच्यते—भूरित्यादिना । भूः सत्तास्वभावः सृष्टिकाले भवतीति च 'सच्च त्यच्चाभवत्' इति श्रुतेः । भुवः सर्वोपादानं सर्वस्थितिकारणं चेति । सुवः संहर्ता । अयं शिरसोऽर्थः । प्रणवार्थ एव प्राणायामघटकीभूतप्रणवसहितसप्तव्याहृतिभिस्तद्घटकीभूतप्रणवसहितगायत्र्या तद्घटकीभूतप्रणवसहितशिरसा च प्रतिपादितः । अखण्डसच्चिदानन्दरूपं ब्रह्म प्रत्यगात्मतयानुजानीते—ओमिति ॥

॥ इति गायत्रीशिरसोऽर्थः ॥

इदानीमायात्वित्यादिगायत्र्यावाहनमन्त्रार्थः कथ्यते । **आयात्वित्यनुवाकस्य वामदेव ऋषिः, अनुष्टुप् छन्दः, गायत्री देवता, गायत्र्यावाहने विनियोगः । आयातु** आगच्छतु **वरदा** अभीष्टफलदात्री **देवी** द्योतनस्वभावा अस्मदनुग्रहार्थमागच्छत्वित्यर्थः । सा कीदृशी—**अक्षरं** न क्षरतीत्यक्षरं नित्येत्यर्थः । पुनः कीदृशं—**ब्रह्मसंमितं** ब्रह्मतुल्येत्यर्थः । **गायत्रीं** प्रथमार्थे द्वितीया । सा हि देवी **छन्दसां** वेदानां **माता** । एवंभूता गायत्री त्वं **नः** अस्माकम् **इदं ब्रह्म** स्तोत्ररूपं **जुषस्व** गृहाण । **ओजोऽसि** हे देवि इन्द्रियाणां शक्तिरसि । **सहोऽसि** वेगवतां वेगोऽसि । **बलमसि** बलवतां बलमसि । बलं भरणसामर्थ्यम् । **भ्राजः** प्रकाशः । प्रकाशवतां प्रकाशोऽसि । **देवानां** वस्वादीनां **धाम** स्थानं तदसि । **नाम** निखिलशब्दराशिरपि त्वमेव **असि** । किं बहुना । **विश्वमसि** विश्वं परिदृश्यमानं यत्प्रपञ्चजातं तदसि । **विश्वायुः** विश्वेषामायुरसि । **सर्वमसि** सर्वेषामनुरक्तानां निर्वाहिकासि । **सर्वायुः** सर्वेषां कालविशेषव्यवस्थापिका च त्वमसीति संबन्धः । **अभिभूः** सर्वाणि भूतान्यभिभवतीत्यभिभूः एवंभूतां **गायत्रीं ओमिति** मन्त्रेण **आवाहयामि** । परब्रह्मरूपां गायत्रीं प्रत्यगात्मतया प्रापयामीत्यर्थः । इत्यायात्वित्यनुवाकार्थः ॥



जपारम्भे आसनविधेरनन्तरं प्राणायामविधेः प्राक् भूतशुद्धिः प्राणप्रतिष्ठा मातृकान्यासश्चेत्येते मन्त्रशास्त्रे कासुचित्स्मृतिष्वपि कर्तव्यत्वेनाभिहिताः । गायत्र्यावाहनानन्तरमपि गायत्र्याः प्रत्यक्षरमृषयः छन्दो देवता ध्यानं न्यासः प्रतिपादं न्यासश्चेत्येते तत्र कर्तव्यत्वेनाभिहिताः सन्ति । तेषामनुष्ठानेऽनुष्ठातॄणां फलाधिक्यं यद्यपि भवति तथापि ये द्विजा औपासनाग्निहोत्रकर्तारस्तेषामुदिते सूर्ये प्रातर्जुहोतीति होमविधानादुदयात्पूर्वमेवोद्धरणविधानाच्च तेषामक्षरादिन्यासादिषु नाधिकारः अवकाशाभावात् । अत एवोक्तं मुक्ताफलके—भरद्वाजेन षडङ्गन्यासमुक्त्वा जपविधानान्तिरत्ये जपे ऋष्यादिषडङ्गन्यासमात्रमावश्यकं फलाधिक्यापेक्षायां तु शक्तस्याक्षरन्यासादयः कार्या इति । तथा च ये च श्रुतिस्मृत्युक्तकर्म कर्तुमशक्ताः परलोकभीरवः गायत्रीजपमात्रेण सद्गतिं काङ्क्षन्तः तैरक्षरन्यासादिकमवश्यं कर्तव्यमेव । ये च गायत्रीपुरश्चरणेऽधिकृतास्तैरवश्यं कर्तव्यम् । ये श्रुतिस्मृत्युक्तकर्मानुष्ठाने मातृकान्यासादिकरणे च शक्तास्ते औपासनाग्निहोत्रादि नित्यं कर्म कृत्वा तदनन्तरं गायत्रीसंबन्ध्यक्षरन्यासादिकं च कुर्वन्तु नाम अविरोधात् । ये च ब्रह्मात्मैकत्वसाक्षात्कारोदयार्थं श्रुत्यन्तश्रवणतदर्थमनननिदिध्यासनपराः सन्ति तेषामृष्यादिन्यासपुरस्सरं गायत्रीजपमात्रमावश्यकं न त्वक्षरन्यासादिकमपि

ज्ञानाभ्यासस्य प्रबलत्वात् । ये च सगुणब्रह्मभजनपरा-
स्तेषामप्येवमेव । अत एव गृह्यपरिशिष्टेऽङ्गन्यासादिकमु-
क्त्वाभिहितम्—एषोऽङ्गन्यासः एनमप्येके नेच्छन्ति स
हि विधिरवैदिक इति । अस्माभिस्तु ग्रन्थविस्तरभयात
भूतशुद्धिप्राणप्रतिष्ठादिकमक्षरन्यासादिकं चात्र न लिखि-
तमिति ज्ञेयम् ।

गायत्र्यावाहनानन्तरं गायत्रीजपं कर्तुमृषिच्छन्दोदे-
वतादिकमुच्यते—**सावित्र्या ऋषिर्विश्वामित्रः, निचृ-
द्गायत्री छन्दः, सविता देवता** । तदाह
व्यासः—'विश्वामित्र ऋषिश्छन्दो निचृद्गायत्रमुच्यते ।
देवता परमात्मा च सविता वा प्रकीर्तिता ॥ प्राणायामे
जपेऽप्यर्घ्यदाने च विनियुज्यते ॥' इति । **तत्सवितुर्व-
रेण्यमिति बीजम् । भर्गो देवस्य धीमहीति शक्तिः ।
धियो यो नः प्रचोदयादिति कीलकम् । मम गाय-
त्रीप्रसादसिद्ध्यर्थे जपे विनियोगः** । 'अङ्गन्यासस्तु
यैर्मन्त्रैः करन्यासोऽपि तैः स्मृतः' इति वचनात्करन्या-
सादिकमुच्यते । **तत्सवितुर्ब्रह्मात्मनेऽङ्गुष्ठाभ्यां नमः ।
वरेण्यं विष्णवात्मने तर्जनीभ्यां स्वाहा । भर्गो देवस्य
रुद्रात्मने मध्यमाभ्यां वषट् । धीमहि ईश्वरात्मने अना-
मिकाभ्यां हुम् । धियो यो नः सदाशिवात्मने
कनिष्ठिकाभ्यां वौषट् । प्रचोदयात् परब्रह्मात्मने कर-**



**तलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः कर्त-
व्यः । भूर्भुवस्सुवरोमिति दिग्बन्धः** । न्यासप्रका-
रमाह भरद्वाजः—'अङ्गुष्ठादिकनिष्ठान्तमङ्गुलीषु न्यसेत्ततः ।
प्रकोष्ठान्तर्बहिः पाण्योस्तलयोस्तलपृष्ठयोः ॥ हृन्मस्तकशि-
खाबाहुनेत्रप्रहरणानि षट् । अङ्गान्यमूनीत्युक्तानि पल्लवानि
षडेव हि ॥ अङ्गुलीभिश्चतसृभिर्द्वयोर्हृदयशीर्षयोः । मुष्टे-
रङ्गुष्ठशिरसा पश्चिमे तस्य वर्मभिः ॥ द्वाभ्यां कराभ्यां
दृक्फालमध्ये मध्याङ्गुलैस्त्रिभिः । अङ्गुष्ठतर्जन्यग्राभ्यां
सशब्दं दिक्षु पार्श्वयोः ॥ षडङ्गन्यासमित्युक्तमिदमेतत्प्र-
कारतः । एवं विन्यस्य गायत्रीमावाह्य च यथाविधि ॥
ध्यात्वोपचारं सकलं कृत्वाथ जपमाचरेत् ॥' इति ॥
अङ्गन्यासानन्तरं गायत्रीध्यानं कर्तव्यम् । तदुच्यते—
**मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दु-
कलानिबद्धमकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदा-
भयामङ्कुशकशाः शुभ्रं कपालं गदां शङ्खं चक्रमथार-
विन्दयुगलं हस्तैर्वहन्तीं भजे ॥** इति कालत्रयेऽप्ये-
करूपं ध्यानमुक्तम् ॥ इदानीं कालत्रयेऽपि प्रत्येकं ध्यानमाह
गोभिलः—'प्रातर्गायत्री रविमध्ये स्थिता रक्तवर्णा कुमारी
अक्षमालाहस्ता हंसासनसमारूढा ब्रह्मदेवत्या ऋग्वेदमु-
दाहरन्ति । मध्यंदिने सावित्री रविमध्ये स्थिता श्वेतवर्णा
यौवनस्था त्रिणेत्रा शूलहस्ता वृषभासनसमारूढा रुद्रदे-

वत्या यजुर्वेदमुदाहरन्ति । सायं सरस्वती रविमध्ये स्थिता श्यामवर्णा वृद्धा चतुर्भुजा चक्रहस्ता सुपर्णासनसमारूढा विष्णुदेवत्या सामवेदमुदाहरन्ति ।' एवं कालत्रयेऽप्येकरूपां कालभेदेन भिन्नरूपां वा गायत्रीं ध्यात्वा पञ्चपूजां कुर्यात् । लं पृथिव्यात्मने गन्धं समर्पयामि । हं आकाशात्मने पुष्पाणि समर्पयामि । यं वाय्वात्मने धूपमाघ्रापयामि । रमग्न्यात्मने दीपं दर्शयामि । वममृतात्मनेऽमृतं महानैवेद्यं निवेदयामि । सं सर्वात्मने सर्वोपचारपूजां समर्पयामीति ॥ अथ चतुर्विंशतिमुद्राः प्रदर्शयेत् । ताश्च कथ्यन्ते—'सुमुखं संपुटं चैव विततं विस्तृतं तथा । द्विमुखं त्रिमुखं चैव चतुःपञ्चमुखं तथा ॥ षण्मुखाधोमुखं चैव व्यापकाञ्जलिकं तथा । शकटं यमपाशं च ग्रथितं सन्मुखोन्मुखम् ॥ प्रलम्बमुष्टिकं चैव मत्स्यकूर्मवराहकम् । सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥' इति । अत एवाह ब्रह्मा—'अथातो दर्शयेन्मुद्राः सुमुखं संपुटं तथा । ततो विततविस्तीर्णे द्विमुखत्रिमुखे ततः ॥ चतुर्मुखं पञ्चमुखं षण्मुखाधोमुखे ततः ॥ व्यापकाञ्जलिकाख्यं च शकटं तदनन्तरम् । यमपाशं च ग्रथितं ततः स्यात्सन्मुखोन्मुखम् ॥ विलम्बमुष्टिको मीनस्ततः कूर्मवराहकौ । सिंहाक्रान्तं महाक्रान्तं ततो मुद्गरपल्लवौ ॥' इति ॥ मुद्रादर्शनफलमाह—'मुद्रा तु मोदयेद्देवीं द्रावयेद्दुरितं तथा । न जातु दर्शयेन्मुद्रां महाजनसमागमे ॥' इति ॥ 'अश्रद्धया



हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥' इति भगवद्वचनात् ॥

गायत्रीजपे श्रद्धोत्पादनार्थं गायत्रीमहिमात्र कथ्यते—अत्राह यमः—'गायत्रीं चैव वेदांश्च तुलया तोलयन्प्रभुः । एकतश्चतुरो वेदान्साङ्गांश्च सपदक्रमान् ॥ एकतश्चैव गायत्रीं तुल्यरूपा तु सा स्मृता ।' इति । ब्रह्माप्याह—'गायत्र्या न परं जप्यं गायत्र्या न परं तपः । गायत्र्या न परं ध्येयं गायत्र्या न परं हुतम् ॥' इति । शङ्खोऽप्याह—'नाघमर्षणात्परमन्तर्जले न व्याहृतिभ्यः परं हुतं न सावित्र्याः परं जप्यम्' इति ॥ संवर्तोऽप्याह—'गायत्र्यास्तु परं नास्ति शोधनं पापकर्मणाम् । गायत्रीमात्रसारोऽपि वरो विप्रः सुयन्त्रितः ॥' इति । स एवाह—'अयाज्ययाजनं कृत्वा भुक्त्वा चान्नं विगर्हितम् । गायत्र्यष्टसहस्रं तु जपं कृत्वा विशुध्यति ॥' इति । विश्वामित्रोऽप्याह—'गायत्र्यास्तु समो नास्ति मन्त्रो वेदचतुष्टये । सर्वे वेदाश्च यज्ञाश्च दानानि च तपांसि च ॥ समानि कलयाप्याहुर्मुनयो न तदित्यृचः । परिहाप्यापि वेदांस्त्रीन्कर्माणि विविधानि च ॥ सावित्रीमात्रमाश्रित्य द्विजो भवति निर्भयः ।' इति ॥ योगयाज्ञवल्क्योऽप्याह—'चतुर्णामपि वेदानां गायत्री जननी भवेत् । तामुपास्ते तु यो नित्यं स विप्रः पङ्क्तिपावनः ॥' इति । मार्कण्डेयोऽप्याह—'सर्वे-

षामपि पापानां सङ्करे समुपस्थिते । दशसाहस्रमभ्यस्ता गायत्री शोधयेत्ततः ॥' इति । स्मृतिरत्ने त्वेवमभिहितम्—'गायत्रीं मूल्यमादाय परस्मै यः प्रयच्छति । स जीवन्नन्त्यजातित्वं प्राप्नोतीह न संशयः ॥' इति । एवं गायत्रीमाहात्म्यप्रतिपादकानि बहूनि स्मृतिवचनानि सन्ति । विस्तरभियास्माभिरत्र नोदाहृतानि ॥

प्रासङ्गिकगायत्रीमाहात्म्यकथनानन्तरं प्रकृतमेव वदामः—प्रकृतस्तु गायत्रीजपः । तत्प्रकारोऽत्राभिधीयते—ओं । भूर्भुवस्सुवः । तत्सवितुर्वरेण्यम् । भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । इति पञ्चावसाना गायत्री जप्तव्या । अत एवाह मनुः—'पञ्चावसानां गायत्रीं जपेन्नित्यमतन्द्रितः' इति । पञ्चसु अवसानं यस्याः सा तथोक्ता । आदौ प्रणवे व्याहृत्यन्ते पदत्रये चेति पञ्चावसानानि । 'विच्छिन्नपादा गायत्री ब्रह्महत्यां व्यपोहति । अच्छिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति ॥' इति स्मरणात् । अत एवेदमपि मनुनोक्तं—'एतदक्षरमेतां च जपेद्व्याहृतिपूर्विकाम्' इति । एतदक्षरं प्रणवः । एतां गायत्रीं व्याहृतिपूर्विकामिति विशेषणात् । व्याहृतीनां प्रणवपूर्वकत्वं गायत्र्याः व्याहृतिपूर्वकत्वं स्पष्टमभिधीयते । अनेनैव गायत्र्यादौ प्रणवोच्चारणं निषिध्यते । प्राणायामे तु गायत्र्यादावपि प्रणव आवश्यकः । 'दशप्रणवसंयुक्तः प्राणायाम' इति यमस्मरणात् । तत्र सप्तव्याहृतिषु प्रत्येकमादावेकैक इति सप्त प्रणवाः गायत्र्यादावेकः प्रणवः गायत्रीशिरस्याद्यन्तयोर्द्वाविति प्राणायामस्य दशप्रणवयुक्तत्वं बोध्यम् । एकप्रणवयुक्तैव गायत्री जप्येत्याह व्यासः—'प्रणवव्याहृतियुतां गायत्रीं तु ततो जपेत् । समाहितमनास्तूष्णीं मनसापि विचिन्तयेत् ॥' इति ॥ अत्राह पितामहः—'प्रणवं व्याहृतीस्तिस्रो गायत्रीं च जपेत्क्रमात् । प्रणवव्याहृतीयुक्ता स्वाहान्ता होमकर्मणि ॥ शुद्धा वात्र प्रयोक्तव्या व्याहृतिप्रणवैर्विना ॥' इति । स्मृतिरत्नेऽप्यभिहितम्—'शुद्धयैव तु होतव्यं गायत्र्या होमकर्मणि । त्रिकेणैव जपः कार्यो जपयज्ञप्रसिद्धये ॥' इति । प्रणवो व्याहृतयो गायत्री चेति त्रिकं ज्ञेयम् । गायत्रीजपयज्ञत्वमाह बोधायनः—'प्रणवो व्याहृतयस्तिस्रस्सावित्रीत्येते पञ्च ब्रह्मयज्ञाः अहरहः किल्बिषात्पावयन्त' इति । यत्तु योगयाज्ञवल्क्य आह—'ओङ्कारं पूर्वमुच्चार्य भूर्भुवस्स्वस्तथैव च । गायत्रीं प्रणवं चान्ते जप एवमुदाहृतः ॥ एषा संपुटगायत्री सर्वपापप्रणाशिनी ॥' इति । यदप्याह वृद्धमनुः—'षडोङ्कारां जपेद्विप्रो गायत्रीं मनसा शुचिः । अनेकजन्मजैः पापैः मुच्यते नात्र संशयः ॥ तिस्रो व्याहृतयः पूर्वं प्रथमोङ्कारसंयुताः । पुनः संहृत्य चोङ्कारं मन्त्रस्याद्यन्तयोस्तथा ॥' इति । तद्गृहस्थब्रह्मचारिव्यतिरिक्तविषयम् । 'संपुटैकषडोङ्कारा गायत्री त्रिविधा

मता । तत्रैकप्रणवा ग्राह्या गृहस्थैर्जपकर्मणि ॥ गृहस्थवत्तु
जप्तव्या सदैव ब्रह्मचारिभिः । संपुटा च षडोङ्कारा
भवेतामूर्ध्वरेतसाम् ॥' इति स्मृतेः । स्मृतिसारसमुच्चयेऽ-
प्युक्तं—'गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् । अन्ते
यः प्रणवं कुर्यान्नासौ वृत्तिमवाप्नुयात् ॥' इति । तथाच
पञ्चावसाना गायत्री जप्तव्येति नियम उक्तः । इदानीं
नियमान्तरमप्युच्यते—प्रातःकाले तिष्ठता जपः कार्यः,
सायमासीनेनैव कार्यः, मध्याह्ने आदित्याभिमुखश्चेत्तिष्ठतैव
कार्यः, आसीनश्चेत्प्राङ्मुख एव जपं कुर्यात् । तदाह
मनुः—'पूर्वां संध्यां जपेत्तिष्ठन्नैशमेनो व्यपोहति । पश्चिमां
तु समासीनो मलं हन्ति दिवाकृतम् ॥' इति । अन्यथा
प्रत्यवायमाह स एव—'न तिष्ठति तु यः पूर्वामुपास्ते
न तु पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजक-
र्मणः ॥' इति । मध्याह्ने विशेषोऽभिहितो माधवीये—'तथा
मध्यमसंध्यायामासीनः प्राङ्मुखो जपेत् । स्थितो जपेत्स-
दाकालमादित्याभिमुखो द्विजः ॥' इति । आदित्याभिमु-
खश्चेत्सदा प्रातर्मध्याह्ने च स्थित एव जपेदित्यर्थः ।
याज्ञवल्क्यस्त्वाह—'जपन्नासीत सावित्रीं प्रत्यगातार-
कोदयात् । संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥'
इति । यत्त्वापस्तम्बेनोक्तं—'संध्ययोश्च बहिर्ग्रामादासनं
वाग्यतश्च' इति । तत्रासनं स्थितेरप्युपलक्षणम् । वाग्यमनं



लौकिकवाग्यमनम् । अन्यथा मन्वादिबहुस्मृतिविरोधा-
पत्तेः । छान्दोग्येऽपि श्रूयते—'कस्माद्ब्राह्मणः सायमासी-
नः संध्यामुपास्ते, कस्मात्प्रातास्तिष्ठन्, यत्सायमासीनः संध्या-
मुपास्ते तया वीरस्थानं जयति, यत्प्रातास्तिष्ठन तया
स्वर्गं लोकं जयति' इति ॥ स्मृत्यर्थसारेऽभिहितं—'आसू-
र्यदर्शनात्तिष्ठन्गायत्रीं प्राङ्मुखो जपेत्' इति । चन्द्रिका-
यामप्यभिहितम्—'प्रातः संध्यां सनक्षत्रामुपक्रम्य यथावि-
धि । गायत्रीमभ्यसेत्तिष्ठन्यावदादित्यदर्शनात् ॥' इति ।
अत्र तिष्ठन्नासूर्यदर्शनादित्यादिवचनात् उदयानन्तरमर्थासि-
द्धमासनमिति केषांचिदभिप्रायः । मुक्ताफलकाराणां तु
तिष्ठन्नासूर्यदर्शनादित्यादिवचनं गायत्रीजपस्य मुख्यकालवि-
धिपरं न तूदयानन्तरमप्यासनविधिपरम्, अग्निकार्यं ततः
कुर्यादित्युदयानन्तरं होमविधानात् । अत उदयानन्तरं
गौणकालजपं कुर्वन्नपि तिष्ठन्नेव कुर्यादित्यभिप्रायः । यथो-
चितमत्र ग्राह्यम् । अत्र गायत्रीजपे आश्रमभेदेन व्यवस्थामाह
व्यासः—'सहस्रपरमां नित्यं शतमध्यां दशावराम् ।
सावित्रीं वै जपेद्विद्वान् प्राङ्मुखः प्रयतः शुचिः ॥' इति ।
अत्र दशावरामित्यापद्विषयमाशौचविषयं च । 'आपन्नश्चाशु-
चिः काले तिष्ठन्नपि जपेद्दश' इत्याश्वलायनस्मरणात् । सह-
स्रपरमामिति वचनं वानप्रस्थयतिविषयम् । शतमध्यामि-
त्येतद्गृहस्थब्रह्मचारिविषयम् । तदाह योगयाज्ञवल्क्यः—

'ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् । वानप्रस्थो यतिश्चैव जपेदष्टसहस्रकम् ॥' अष्टसहस्रमष्टोत्तरसहस्रमित्यर्थः । अत्र केचिदुदिते सति होमविधानाद्यावदुदय एव जपः, अष्टोत्तरशतसंख्याया असमाप्तावप्युदये गृहस्थब्रह्मचारिणामुपस्थानं युक्तम्, ब्रह्मचारिणामप्यग्निकार्यविधानादित्याहुः । अन्ये तु—'ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत्' इति वचनेन संख्यानियमाविधानाद्धोमस्यापि सङ्गवान्तः प्रातरित्याश्वलायनेन मुख्यकालत्वोपदेशात् उदितेऽपि जपसंख्यापूर्तिं कृत्वैव होमो युक्त इत्याहुः । अयमेव युक्त इति प्रतिभाति । अनुदितहोमिभिस्तु गायत्र्यष्टोत्तरशतजपानन्तरं उत्तमे शिखरे देवीति गायत्रीमात्रोपस्थानं कृत्वा हुत्वा मित्रोपस्थानमुदयानन्तरं कार्यमित्याहुः । यथोचितमत्र ग्राह्यम् । जपयज्ञस्य भेदोऽभिहितो माधवीये—'वाचिकाख्य उपांशुश्च मानसश्च त्रिधा स्मृतः । त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरः ॥' इति । अत्र विश्वामित्रः—'उत्तमं मानसं जप्यमुपांशुर्मध्यमः स्मृतः । अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः ॥ वाचिकं चैकमेकं स्यादुपांशु शतमुच्यते । सहस्रं मानसं प्रोक्तं मन्वत्रिभृगुनारदैः ॥' इति । एतेषां लक्षणमाह हारीतः—'मन्त्रमुच्चारयेद्वाचा जपयज्ञः स वाचिकः । स उपांशुजपोऽशब्दश्चलजिह्वादशच्छदः ॥ मानसस्त्वचलज्जिह्वादशनच्छद ईरितः ।'



इति । अचलजिह्वादशनच्छदं यस्येति विग्रहः । स एवाह—'मुक्तिदो मानसो ज्ञेय उपांशुः सर्वसिद्धिदः । त्रिविधो जपयज्ञः स्याद्वाचिकः क्षुद्रकर्मणि ॥' इति । अत्राह वैयाघ्रपादः—'त्रिविधो जपयज्ञः स्यान्मानसोपांशुभाषिकः । परश्रवणयोग्यो यः स भाषिक उदीरितः ॥ उपांशुरोष्ठस्पर्शादिमात्रः स श्रुतिगोचरः । यो भवेदचलजिह्वादशनावरणो जपः ॥ मानसः स समाख्यातो जपः श्रुतिविभूषणैः ॥' इति । यत्तु व्यासेनोक्तं—'मनसैव जपं कुर्यात्सावित्र्यास्तु विशेषतः' इति तन्मानसजपप्रशंसाभिप्रायम् आशौचविषयं वा । आशौचे मानसजपविधानात् । अत्र जपे नियम उच्यते । तदाह व्यासः—'प्रातरुत्तानपाणिभ्यां स्तब्धाभ्यां दिनमध्यमे । अधोमुखाभ्यां पाणिभ्यां सायं संलक्षितो जपेत् ॥' इति । स एवाह—'प्रातर्नासा समौ कुर्यान्मध्याह्ने तूरसा समौ । सायंकाले नाभिसमौ करौ कुर्यादतन्द्रितः ॥ अपवित्रकरोऽशुद्धः प्रलपन्न जपेत्क्वचित् । अप्रावृतकरो वापि शिरसि प्रावृतोऽपि वा ॥' इति । अत्राह शौनकः—'मनस्संतोषणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः ॥' इति । अत्राह व्यासः—'न प्रकाशं न च हसन् न पार्श्वमवलोकयन् । नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥ न पदासनमाक्रम्य न पदेन पदं

तथा । जपकाले न भाषेत व्रतहोमादिकेषु च ॥ एतेष्वपावसक्तस्तु यद्यागच्छेद्द्विजोत्तमः । अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत् ॥' इति । अपाश्रितः स्तम्भादिश्रितः । अत्राह संवर्तः— 'क्रोधं मान्द्यं क्षुतं निद्रां ष्ठीवनं च विजृम्भणम् । दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि ॥ आचामेत्संभवे चैषां स्मरेद्विष्णुं सुरार्चितम् । ज्योतींषि च प्रपश्येद्वा कुर्याद्वा प्राणसंयमम् ॥ ज्वलनं गांश्च विप्रांश्च यतीन् पापविशुद्धये ।' इति । रत्नावल्याम्—'चण्डालाशौचिपतितान्दृष्ट्वाचम्य पुनर्जपेत् । तैरेव भाषणं कृत्वा स्नात्वाचम्य पुनर्जपेत् ॥' इति । अत्राह नारदः—'श्वशूद्रपतितांश्चैव रासभं च रजस्वलाम् । दृष्ट्वा तोयमुपस्पृश्य भाष्य स्नात्वा पुनर्जपेत् ॥' इति । स एवाह—'मार्जारं कुक्कुटं क्रौञ्चं श्वानं गृध्रं खरं कपिम् । दृष्ट्वाचम्य जपेत्कर्म स्पृष्ट्वा स्नानं विधीयते ॥' इति । अत्राह योगयाज्ञवल्क्यः—'यदि वाग्यमलोपः स्याज्जपादिषु कदाचन । व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥ तद्विष्णोरिति मन्त्रोऽयं स्मर्तव्यः सर्वकर्मसु । गायत्री वैष्णवी ह्येषा प्रोक्तेदंविष्णुरित्यपि ॥' इति । अत्राह बोधायनः—'नाभेरधस्तु संस्पर्शं कर्मयुक्तो विवर्जयेत्' इति । अत्राह यमः—'नाभेरधः स्वकायं तु स्पृष्ट्वा प्रक्षालयेत्करम् । दक्षिणं वा स्पृशेत्कर्णं जपेद्वा विष्णुमव्ययम् ॥ नान्यथोक्तिर्नान्यमना



न च व्यत्ययस्तपत्करः । न जपेत्प्रलपन्वापि कृतं निष्फलमुच्यते ॥' इति । अत्राह व्यासः—'होमः प्रतिग्रहो दानं भोजनाचमने जपः । न बहिर्जानु कार्याणि साङ्गुष्ठानि समाचरेत् ॥ उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः । चिन्ताव्याकुलचित्तो वा श्रान्तः क्रुद्धो बुभुक्षितः ॥ अनासनः शयानो वा गच्छन्नुद्धृत एव च । रथ्यायामशिवस्थाने न जपेत्तिमिरावृते ॥ उपानद्गूढपादो वा यानशय्यागतस्तथा । प्रसार्य न जपेत्पादावुत्कटासन एव वा ॥ जपेन्न प्रौढपादश्च नावष्टब्धोऽलसोऽशुचिः । नासंव्यानो ह्यदर्भश्च नाशिखोऽकच्छबन्धनः ॥' इति । अत्राह भरद्वाजः—'निष्ठीवजृम्भणे क्रोधनिद्रालस्यक्षुधो मदः । पतितश्वान्त्यजालोका दृश्यते जपवैरिणः ॥' इति । अत्र शाण्डिल्य आह—'प्रदक्षिणे प्रणामे च पूजायां हवने जपे । न कण्ठावृतवस्त्रः स्याद्दर्शने गुरुदेवयोः ॥' इति । स एवाह—'आचार्यं भगवद्भक्तं भगवन्मन्दिरं जलम् । अश्वत्थमग्निमर्कं च पृष्ठीकृत्य जपेन्न तु ॥' इति । अर्कपृष्ठीकरणनिषेधः माध्याह्निकजपव्यतिरिक्तविषयः । तत्रासीनस्य प्राङ्मुखत्वेन जपविधानात् । 'आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् । उपस्थातुं न निर्गच्छेद्वर्जयेच्च प्रदक्षिणम् ॥' इति वचनात् आर्द्रवाससा स्थले जपादिकं न कार्यमित्युक्तं भवति । अत एवाह व्यासः—'न क्लिन्नवासाः स्थलगो

जपादीनाचरेद्बुधः' इति । 'यदि स्यात् क्लिन्नवासा वै वारि-
मध्यगतो जपेत्' इति व्यासवचनमापद्विषयम् न सार्व-
कालिकम् । अत एवाह गोभिलः—'मतिमान्न कदाचित्तु
गायत्रीमुदके जपेत् । गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्तीर्य तां
जपेत् ॥' इति । सुमन्तुस्त्वेवमाह—'कण्ठवस्त्रावृतस्यैव
वस्त्रार्धालम्बिनस्तथा । उत्तरीयव्यतीतस्य समस्ता निष्फला
क्रिया ॥' इति । गौतमस्त्वाह—'गच्छतस्तिष्ठतो वाऽपि
स्वेच्छया कर्म कुर्वतः । अशुचेर्वा विना संख्यां तत्सर्वं
निष्फलं भवेत् ॥' इति । संख्या चोपवीतेन न कार्या ।
अत एवाह गौतमः—'संख्या चेदुपवीतेन जपहोमादि
निष्फलम्' इति । संख्या चाक्षमालादिभिः कार्या । तदुक्तं
मन्त्रशास्त्रे—'अकारादिक्षकारान्ता अक्षमालेत्युदाहृता । अष्ट-
वर्गैश्च सङ्ख्यातामष्टोत्तरशतं जपेत् ॥' इति । तदसंभवे
हारीत आह—'शङ्खरौप्यमयी माला काञ्चनी निम्बजैः
फलैः । पद्माक्षकैश्च रुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः ॥ राजतै-
र्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः । पुत्रजीवमयी माला शस्ता
वै जपकर्मणि ॥' इति । अत्राह योगयाज्ञवल्क्यः—'स्फटि-
केन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः । अक्षमाला तु कर्तव्या
उत्तमा ह्युत्तरोत्तरा ॥' इति । स्मृत्यर्थसारे त्वभिहितं—'हस्ते-
नावर्तयेद्देवीमक्षसूत्रैरथापि वा । सौवर्णै राजतैस्ताम्रैः स्फटि-
कै रत्नजैस्तथा ॥ अरिष्टैः पुत्रजीवोत्थैरिन्द्राक्षैः शङ्खसम्भवैः ।



रुद्राक्षैरपि पद्माक्षैः कुशग्रन्थिभिरेव वा ॥ मणिभिस्त्वक्ष-
सूत्रं वा तदष्टशतसङ्ख्यया । चतुःपञ्चाशता वापि सप्त-
विंशतिरेव वा ॥' इति । अत्र प्रजापतिराह—'अष्टो-
त्तरशतं कुर्याच्चतुःपञ्चाशदेव च । सप्तविंशति कार्याणि ततो
न्यूनं न कारयेत् ॥' इति । स्मृत्यन्तरेऽपि—'अष्टो-
त्तरशतैर्माला पञ्चाशच्चतुरुत्तरैः । सप्तविंशतिभिः कार्या
सर्वसाधारणे जपे ॥ अष्टोत्तरशतैर्माला ह्युत्तमा परिकीर्तिता ।
चतुःपञ्चाशता माला मध्यमा परिकीर्तिता ॥
अधमा प्रोच्यते माला सप्तविंशतिसंख्यया ॥' इति ।
अत्र फलतारतम्यमाह गौतमः—'अङ्गुल्या जपसंख्यान-
मेकमेकमुदाहृतम् । रेखयाष्टगुणं पुत्रजीवैर्दशगुणाधिकम् ॥
शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम् । स्फटिकैर्दश-
साहस्रं मौक्तिकैर्लक्षमुच्यते ॥ पद्माक्षैर्दशलक्षं तु सौवर्णैः
कोटिरुच्यते । कुशग्रन्थ्या च रुद्राक्षैरनन्तफलमश्नुते ॥
तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका । सर्वकर्माणि सर्वेषा-
मीप्सितार्थफलप्रदा ॥' इति । अक्षमालाकरणप्रकारमाह
हारीतः—'मणिमेकैकमादाय श्वेतसूत्रे प्रयोजयेत् । प्रोतसंयो-
गमेकाक्षं मेरुत्वेनाग्रतो न्यसेत् ॥ एकैकमणिमध्ये तु ग्रन्थि-
बीजं प्रकल्पयेत् । जपमालां विधायेत्थं ततः संस्कारमा-
रभेत् ॥' इति । संस्कारश्चाचारनवनीतेऽभिहितः—'क्षालये-
त्पञ्चगव्येन सद्योजातेन वै जलैः । चन्दनागरुगन्धाद्यै-

वामदेवेन घर्षयेत् ॥ धूपयेत्तामघोरेण लिम्पेत्तत्पुरुषेण तु । मन्त्रेण शतवारं तु पञ्चमेनाभिमन्त्रयेत् ॥' इत्यादि । अक्षमालया गणनप्रकारमाह हारीतः—'अपि वाङ्गुष्ठमध्यस्थां चालयेन्मध्यमाग्रतः । न स्पृशेद्वामहस्तेन करभ्रष्टान्न कारयेत् ॥ तर्जन्या न स्पृशेत्सूत्रं कम्पयेन्न विधूनयेत् । प्रमादात्पतिते हस्ताच्छतमष्टोत्तरं जपेत् ॥ जीर्णे सूत्रे पुनस्सूत्रं ग्रथयित्वा शतं जपेत् । भुक्तिमुक्तिप्रदः सोऽयं मालिकागणनक्रमः ॥' इति । गौतमस्त्वेवमाह—'अङ्गुष्ठं मोक्षदं विद्यात्तर्जनीं शत्रुनाशिनी । मध्यमा धनकामायानामिका पौष्टिकी तथा ॥ कनिष्ठा रक्षणी प्रोक्ता जपकर्मणि शोभना । अङ्गुष्ठेन विना जप्यं कृतं तदफलं भवेत् ॥ उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके । प्राणायामत्रयं कृत्वा घृतप्राशनमाचरेत् ॥' इति । पर्वभिश्च जपः कार्य इत्युक्तं रत्नावळ्याम्—'पर्वभिश्च जपः कार्यो नाङ्गुलीनां निपातनैः । तन्निपातैस्तु यज्जप्तं सर्वं विद्यात्तदासुरम् ॥' इति । रेखाभिर्गणनप्रकारमाह शङ्खः—'अथाङ्गुलीनां रेखाभिर्जपमन्वहमाचरेत् । प्रारभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात् ॥ तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥ मध्यमाङ्गुलिमूले तु यत्पर्वद्वितयं भवेत् । तं वै मेरुं विजानीयाज्जपेत्तत्रातिलङ्घयेत् ॥' इति । पर्वभिर्जपे पक्षान्तरमाह स एव—'अनामिकामूलपर्व प्रारभ्यापि क्रमेण तु । मध्यमामूलपर्यन्तं जपेद्दशसु पर्वसु ॥' इति । तज्जपे पुनरपि पक्षान्तरमाह स एव—'मध्याङ्गुलेर्मध्यरेखां समारभ्य प्रदक्षिणम् । मध्यमामूलपर्यन्तमङ्गुष्ठेन यथाक्रमम् ॥ स्पृष्ट्वा द्वादशसंख्या स्यादेकवारेण तन्नव । वामहस्तेन संख्यातं शतमष्टोत्तरं स्मृतम् ॥' इति । अत्र पक्षत्रये यथोपदेशं विकल्पो द्रष्टव्यः । रत्नावल्यामप्यभिहितं—'पर्वभिस्तु जपेद्देवीमन्यत्रानियमः स्मृतः । गायत्र्या वेदमूलत्वाद्वेदः पर्वसु गीयते ॥' इति । तदेतद्रुद्राक्षकुशग्रन्थ्योरप्युपलक्षणम् ॥ यदाह प्रजापतिः—'ब्राह्मैरानन्त्यमाप्नोति रौद्रैश्च मणिभिर्बुधः । ब्राह्मः कुशमयो रौद्रो रुद्राक्षः पापनाशनः ॥ सावित्र्यास्तु जपस्ताभ्यामेकोऽप्यानन्त्यमृच्छति । गायत्र्या वेदबीजत्वात्पर्वभिश्च जपः स्मृतः ॥' इति । अत्राह गौतमः—'अनेन विधिना यस्तु जपं कुर्यात्प्रयत्नतः । प्रपन्नो विपुलाँल्लोकान्भुक्तिं मुक्तिं च विन्दति ॥' इति । गायत्र्यर्थश्च प्राणायामप्रकरणेऽभिहितः । एवमुक्तरीत्या गायत्रीं जप्त्वाङ्गन्यासं ध्यानं पञ्चपूजां च पूर्ववत्कृत्वा 'सुरभिं ज्ञानचक्रे च योनिं कूर्मं च पङ्कजम् । लिङ्गं निर्याणमुद्रां च अष्टौ मुद्राः प्रदर्शयेत् ॥' इति संवर्तवचनादष्टौ मुद्राः प्रदर्शयेत् ॥



अनन्तरं तुरीयगायत्रीजपः कर्तव्यः । तत्प्रकार उच्यते । **अस्य श्रीतुरीयगायत्रीमहामन्त्रस्य, अथर्वणपुत्रो विमल ऋषिः, अनुष्टुप् छन्दः, तुरीयगायत्री देवता ।**

परोरजस इति बीजम्, असावद इति शक्तिः, ओमिति कीलकम् । मम तुरीयगायत्रीप्रसादसिद्ध्यर्थे जपे विनियोगः । परः अङ्गुष्ठाभ्यां नमः । रजसे तर्जनीभ्यां स्वाहा । असौ मध्यमाभ्यां वषट् । अदः अनामिकाभ्यां हुम् । ओं कनिष्ठिकाभ्यां वौषट् । परो रजसे सावदोम् करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानं—'यद्देवासुरपूजितारुणनिभं सोमार्कमारान्वितं पुन्नागाम्बुजनागपुष्पबकुलैर्व्यासादिभिश्चार्चितम् । नित्यं ध्यानसमाधियोगकरणं कालाग्निरुद्रोपमं तत्संहारकरं नमामि सततं पातालषष्ठं मुखम् ॥' इति ध्यानं कृत्वा पञ्चपूजां च कृत्वा, परो रजसे सावदोमिति मूलमन्त्रं गायत्रीजपस्य दशांशं जपित्वा पूर्वोक्तरीत्याङ्गन्यासं ध्यानं पञ्चपूजां च कुर्यात् ॥

अनन्तरम्—'आदावन्ते च गायत्र्याः प्राणायामत्रयं स्मृतम्' इति कर्मप्रदीपवचनात्प्राणायामत्रयं पूर्वोक्तरीत्या कृत्वानन्तरं सूर्यस्योदये सति प्रातःकालादिभेदेन तत्तत्संध्योपस्थानं करिष्य इति संकल्प्य, उत्तमे शिखरे देवि इत्यनेन मन्त्रेण तस्य ऋषिच्छन्दोदेवतान्यासपुरःसरं गायत्र्युपस्थानं कुर्यात् । तदाह पितामहः—'एवं जप्त्वा यथाशक्ति उदिते तु दिवाकरे ।



उत्तमेत्यनुवाकेन उद्वास्य तु यथागतम् ॥ उत्तमेत्यनुवाकस्य वामदेव ऋषिः स्मृतः । अनुष्टुप् च तथा छन्दो गायत्री देवता स्मृता ॥' इति ॥

अनन्तरं मित्रस्येत्यादिनादित्योपस्थानं कुर्यात् । उपस्थानं तु स्वशाखाधीतैर्मन्त्रैः कार्यम् । तदाह वसिष्ठः—'उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत्' इति । अत्र यजुःशाखिनां मित्रस्य मित्रो जनान्प्रसमित्रेति तिसृभिरुपस्थानम् । तत्र मित्रस्येत्यस्योपस्थानमन्त्रस्य विश्वेदेवा ऋषयः । गायत्री छन्दः । मित्रो देवता । सूर्योपस्थाने विनियोगः । मित्रो जनानित्यस्य विश्वेदेवा ऋषयः । त्रिष्टुप् छन्दः । मित्रो देवता । विनियोगः पूर्ववत् । प्रसमित्रेत्यस्य विश्वेदेवा ऋषयः । त्रिष्टुप् छन्दः । मित्रो देवता । विनियोगः पूर्ववत् । अत्र 'उत्तमे शिखरे देवि' इत्यादिमन्त्रार्थ उच्यते । देवी द्योतनशीला । अत्र विभक्तिव्यत्ययः । हे देवि द्योतनशीले भूम्यामागत्य ब्राह्मणेभ्योऽस्मभ्यमनुज्ञानं कृत्वा, उत्तमे उत्कृष्टतमे शिखरे सर्वस्मादुच्छ्रिते पर्वतस्य सुमेरोः मूर्धनि ब्रह्मलोके स्वस्थानं यथासुखं गच्छेति । आयात्विति मन्त्रेणावाहितायाः गायत्र्याः अनेन विसर्जनम् । इदानीं मित्रस्येत्यादिमित्रोपस्थानमन्त्रस्यार्थ उच्यते । मित्रस्य चर्षणीधृतश्श्रवो देवस्य सानसिम् । सत्यं चित्रश्श्रवस्त-

मम् ॥ अत्र मित्रशब्देनादित्यमण्डलान्तर्वर्ती परमात्मैवाभिधीयते । वक्ष्यमाणगुणानां सर्वप्राणिप्रेरकत्वादीनां तस्मिन्नेव संभवात् । चर्षणीधृतः चर्षणयो मनुष्या इति सर्वप्राणिनामप्युपलक्षणम् । तांस्तत्तत्कृतकर्मफलदानद्वारा धारयतीति चर्षणीधृत् तस्य । देवस्य द्योतनशीलस्य स्वप्रकाशस्य । श्रूयत इति श्रवः यशः सत्यकामत्वसत्यसंकल्पत्वादिरूपम् । तत्कीदृशं—सानसिं सम्यक् भजनीयम् । पुनः कीदृशं—सत्यम् अबाधितम् । पुनः कीदृशं—चित्रश्रवस्तमम् आश्चर्यचेष्टानुबन्धितया श्राव्यतमम् । एतादृशं यशः स्मराम इति वाक्यशेषः । **मित्रो जनान्यातयति प्रजानन्** । मित्रस्तदन्तर्यामी परमात्मा जनान्प्राणिनः तत्तत्प्राणिपूर्वकृतधर्माधर्मरूपं कर्म प्रजानन् प्रकर्षेण जानन् यातयति पूर्वकर्मानुसारेणोत्तरत्र तत्तत्कर्मसु प्रेरयति । एतेन तस्य नास्ति वैषम्यनैर्घृण्यदोषप्रसक्तिः । **मित्रो दाधार पृथिवीमुत द्याम्** ॥ मित्रः पूर्वोक्तरीत्या परमात्मा पृथिवीं द्याम् । अप्यर्थकेनोतशब्देन सर्वमपि चराचरं जगद्गृह्यते । तथाच चेतनाचेतनात्मकं सर्वमपि जगत् दाधार धारयति । **मित्रः कृष्टीरनिमिषाभिचष्टे** ॥ मित्रः उक्तरीत्या परमात्मा । कृष्टीः प्रजाः पुण्यपापयोः प्रवर्तमानाः । अनिमिषा अनिमिषेण नित्यज्ञानचक्षुषा आभिचष्टे अभिमुखं साक्षित्वेन पश्यतीत्यर्थः । **सत्याय हव्यं घृतवद्विधेम** ॥ सत्याय



कालत्रयाबाध्याय परमात्मने हव्यं चरुं घृतवत् घृतसिक्तं विधेम दद्म इत्यर्थः । **प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन** ॥ हे मित्र आदित्यान्तरवस्थित यः मर्तः मर्त्यः ते तुभ्यं व्रतेन नित्यनैमित्तिककर्मणा युक्तः शिक्षति हविर्ददाति सः मर्त्यः प्रकर्षेण प्रयस्वानस्तु प्रयः अन्नं तद्वानस्तु । अन्नादिसंपद्युक्तो भूयादित्यर्थः । **न हन्यते न जीयते त्वोतः** ॥ त्वा त्वया भजनादिना प्रीतेन ऊतः रक्षितः केनापि जन्तुना न हन्यते न जीयते शतसंख्याकादायुषः न हीयत इत्यर्थः । **नैनमंहो अश्नोति** ॥ एनं त्वया रक्षितम् अंहः पापं नाश्नोति न संबध्नातीत्यर्थः । किंच **अन्तितो न दूरात्** ॥ अन्तितः समीपे इह जन्मनि । दूरात् पूर्वजन्मनि च कृतमंहः न संबध्नातीति यावत् । ननु मुक्ताफलकारप्रभृतिभिर्मित्रेत्यादिमन्त्रस्य सूर्याख्यदेवतात्मपरतया व्याख्यातत्वात्कथं भवद्भिः परमात्मपरतया व्याख्यानं कृतमिति चेत् नैवम् । सर्वप्राणिप्रेरकत्वद्यावापृथिव्यादिसर्वजगदाधारत्वसाक्षित्वादीनां देवतात्मनोऽसंभवात् परमात्मपरतयैव व्याख्यानं कृतमित्यलं विस्तरेण ॥

इदानीं मध्याह्ने संध्योपस्थानमन्त्रस्यासत्येनेत्यस्य ऋषिच्छन्दोदेवताविनियोगोक्तिपुरःसरमर्थवर्णनमत्र क्रियते ।

**आसत्येनेति मन्त्रस्य, हिरण्यगर्भ ऋषिः, त्रिष्टुप्**

**छन्दः, सविता देवता, मध्याह्नसंध्योपस्थाने विनियोगः । आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् ॥** सविता अत्रादित्यान्तरवस्थितपरमात्मैव सवितृशब्देन कथ्यते । 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुष' इति श्रुतेः । अन्तस्तद्धर्मोपदेशादित्यधिकरणन्यायेन वक्ष्यमाणानां सर्वात्मत्वादिगुणानां तस्मिन्नेव संभवाच्च । स एवादित्यात्मा सन् सत्येन रजसा ज्योतिषा आवर्तमानः अमृतं अमृतान्देवान् मर्त्यं च मर्त्ययोग्यान्मनुष्यादींश्च निवेशयन्व्यापारयन् देवः द्योतनात्मकः हिरण्ययेन हिरण्मयेन रथेन भुवना भुवनानि विपश्यन् विशेषेण पश्यन् साक्षित्वेन वर्तमानः आयातीत्यन्वयः ॥ **उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥** तमसः मायासंज्ञात् परि उपरि स्थितं मायातत्कार्यसंसारमण्डलादनेककोटिब्रह्माण्डगर्भादविद्यापादादुपरिस्थितं 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुत्युक्तं विद्यानन्दतुरीयाख्यत्रिपदामृतरूपं परं ब्रह्म उत्पश्यन्तः ऊर्ध्वं पश्यन्तः । ऊर्ध्वमित्युपलक्षणं, सर्वेष्वपि भूतेषु प्रत्यगात्मत्वेन स्थितं देवम् । तत्कीदृशं—उत्तरं ज्योतिः उत्कृष्टतरं ज्योतिः, 'तच्छुभ्रं ज्योतिषां ज्योतिः' इति श्रुतेः । देवं द्योतनशीलं सूर्यं सुष्ठु ईरयति प्रेरयतीति सूर्यसंज्ञम् ।



प्रेरणे सुष्ठुत्वं नाम सर्वैरपि प्राणिभिः कृतं पुण्यपापात्मकं कर्म बुद्ध्वा तदनुसारेण तत्तत्प्राणिप्रेरकत्वम् । तथाचान्तर्यामिरूपेणापि सर्वभूतेषु स्थितमित्यर्थः । एवं पश्यन्तो वयं तदात्मत्वज्ञानसंपन्नाः सन्तः उत्तमम् उत्कृष्टतमं ज्योतिः ज्योतिषामपि भासकं ज्ञानस्वरूपं 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतिसिद्धं परं ब्रह्म । अगन्म गमिष्यामः । तदात्मतयावस्थिता भविष्याम इत्यर्थः । **उदु त्यं जातवेदसं देवं वहन्ति केतवो दृशे विश्वाय सूर्यम् ॥** अत्र उदिति उ इति त्यमिति च पदच्छेदः । उदित्यस्य वहन्तीत्यनेनान्वयः । उ इत्यनर्थको निपातः । त्यमित्यस्य तमित्यर्थः । जातानि वेत्तीति जातवेदास्तं देवं द्योतनस्वभावं सूर्यं सूर्यमण्डलान्तरवस्थितं तं हिरण्मयपुरुषं केतवः सहस्रसंख्याकाः दीधितयः । विश्वाय, षष्ठ्यर्थे चतुर्थी, विश्वस्य प्रपञ्चस्य दृशे दर्शनाय उद्वहन्त्युद्गमयन्तीत्यर्थः । तदेवान्तर्यामिरूपं ब्रह्म स्तौति—**चित्रं देवानामुदगादनीकम् ॥** दैत्ययुद्धे देवानामनीकं सैन्यं चित्रं नानाविधं स्वांशेन प्रविष्टं सत् ब्रह्म जयं कारयित्वा तेषामग्रे उदगात्प्रादुरभूत् । इदं तु केनोपनिषत्प्रसिद्धम् । किंच—**चक्षुर्मित्रस्य वरुणस्याग्नेः ॥** मित्रस्य सूर्यस्य चक्षुर्भासकत्वप्रदम् । एतेनास्य मन्त्रस्य सूर्याख्यदेवताव्यतिरिक्तब्रह्मपरत्वमेव सिद्धम् । अग्नेश्चक्षुस्तस्यापि भासकत्वप्रदम् ।

एतत्सर्वस्यापि ज्योतिर्गणस्योपलक्षणम् । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' इति स्मृतेः । वरुणस्य चक्षुरिव चक्षुः ज्ञानप्रदम् । एतदपि सर्वदेवोपलक्षणम् । चक्षुर्देवानामिति श्रुतेः । पुनरपि तदेव ब्रह्म स्तौति—**आप्रा द्यावा पृथिवी अन्तरिक्षम्** ॥ सर्वांश्च लोकान् स्वात्मना आप्राः प्रथमपुरुषस्थाने मध्यमपुरुषः । पूरयतीत्यर्थः । **सूर्य आत्मा जगतस्तस्थुषश्च** ॥ अत्रापि सूर्यशब्देन सूर्यमण्डलान्तरवस्थितः परमात्मैवाभिधीयते । स जगतः जङ्गमस्य तस्थुषः स्थावरस्य चात्मा प्रत्यगात्मभूतः । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतेः । एतेनापि ब्रह्मपरत्वमेव मन्त्रस्य सिद्धम् ॥ **तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्** ॥ तच्चक्षुरिव चक्षुः ज्ञानप्रदं ब्रह्म देवहितं देवानां हितम् । कीदृशं—शुक्रं शुद्धम् । तत्किं कृतवत्—पुरस्तात् पूर्वस्यां दिशि आदित्यमण्डलान्तरवस्थितं सत् उच्चरत् उद्गच्छत् । **पश्येम शरदश्शतम्** ॥ तच्चादित्यमण्डलान्तरवस्थितं ब्रह्म संवत्सरशतं पश्येम साक्षात्कुर्मः । **जीवेम शरदश्शतम्** ॥ साक्षात्कारासिद्ध्यर्थं सर्वसंपद्भिः सह वर्षशतं जीवेम । **नन्दाम शरदश्शतम्** ॥ सत्पुत्रसच्छिष्यादिभिः सह वर्षशतं हृष्टाः स्याम । **मोदाम शरदश्शतम्** ॥ तैः साकं वर्षशतं प्रहृष्टाः स्याम । **भवाम शरदश्शतम्** ॥



सर्वज्ञपरब्रह्मानुग्रहपात्रं भवाम । शरदश्शतमित्यस्योत्तरत्राप्युक्तार्थो द्रष्टव्यः । **शृणवाम शरदश्शतम्** ॥ मोक्षोपयोगिब्रह्मात्मैकत्वज्ञानसाधनीभूततत्त्वमस्यादिमहावाक्यार्थं शृणवाम । **प्रब्रवाम शरदश्शतम्** ॥ सच्छिष्यान्प्रति ब्रह्मात्मतत्त्वप्रवक्तारः स्याम । **अजिताः स्याम शरदश्शतम्** ॥ श्रुत्यन्तार्थविरुद्धवादिभिः शुष्कतार्किकैरन्यैश्च शत्रुभिरजिताः स्याम । **ज्योक्च सूर्यं दृशे** ॥ ज्योक् चिरकालं सूर्यमुक्तरीत्या सूर्यमण्डलान्तरवस्थितं परमात्मानं दृशे पश्येम । तस्यैव परमात्मनः प्रसादं प्रार्थयामहे । **य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्यात्स मा वृषभो लोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनातु** ॥ यः महतोऽर्णवात् सरिरस्य सलिलस्य मध्यात् विभ्राजमानः विशेषेण भ्राजमानः सन् उदगात् सः वृषभः श्रेष्ठः लोहिताक्षः पङ्कजाक्षः । पुनः कीदृशः—विपश्चित्सर्वज्ञः । सूर्यः सूर्यमण्डलान्तरवस्थितः सर्वजगदन्तर्यामी परब्रह्माभिधः परमात्मा मा मां मनसा संकल्पमात्रेण पुनातु शुद्धं करोतु । स्वस्वरूपेणैक्ययोग्यं करोत्वित्यर्थः । मध्याह्नसंध्योपस्थानमन्त्रस्यार्थ उक्तः ॥

इदानीं सायंसंध्योपस्थानमन्त्रस्य इमं मे वरुणेत्यस्य ऋषिच्छन्दोदेवताविनियोगोक्तिपुरस्सरमर्थवर्णनमत्र क्रियते । इमं मे वरुणेति मन्त्रस्य शुनश्शेफ ऋषिः, **गायत्री च्छन्दः, वरुणो देवता, सायंसंध्योपस्थाने**

विनियोगः । तत्त्वायामीति मन्त्रस्य शुनश्शेफ ऋषिः, त्रिष्टुप् च्छन्दः, देवता विनियोगः पूर्ववत् । यच्चिद्धि त इत्यस्य शुनश्शेफ ऋषिः, गायत्री छन्दः, देवता विनियोगः पूर्ववत् । यत्किंचेदमित्यस्य वासिष्ठ ऋषिः, त्रिष्टुप् छन्दः, देवता विनियोगः पूर्ववत् । कितवास इत्यस्य अत्रि ऋषिः, त्रिष्टुप् छन्दः, देवता विनियोगः पूर्ववत् । इमं मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युराचके ॥ शुनश्शेफः विश्वामित्रोपदिष्टमन्त्रेण परमात्मानमेव वरुणत्वेन प्रार्थयते—हे वरुण इमं वक्ष्यमाणं मे मम हवं स्तोत्रं श्रुधि शृणु । अद्या च इदानीमेव मां मृडय सुखय सुखिनं कुरु । अवस्युः आत्मनोऽवनेच्छुः त्वाम् आचके अभिमुखेन प्रार्थये । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ तत् तदर्थं रक्षणार्थमेव ब्रह्मणा मन्त्रेण वन्दमानः स्तुवन् त्वा त्वां यामि शरणं प्रपद्ये । यजमानः नरपशुना यष्टा हविर्भिः मच्छरीरमयैः तद्यज्ञफलं प्रशास्ते प्रार्थयते । अहेडमानो वरुणेह बोध्युरुशँस मा न आयुः प्रमोषीः ॥ हे उरुशंस बहुभिर्यजमानैः स्तूयमान इहास्मिन्कुले अस्मदीयं विज्ञापनम् अहेडमानः अक्रुध्यन् सन् बोधि बुध्यस्व । किं तत्प्रार्थनीयमिति चेदुच्यते—मा न आयुः प्रमोषीः । नः अस्माकम् आयुर्जीवितं मा प्रमोषीः मापहार्षीः । यजमानोऽपि यज्ञफलं लभ-



ताम् । अहमपि दीर्घायुः स्यामिति भावः । तदेव वयं प्रार्थयामहे । यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि ॥ चिद्धीति द्वावपि निपातावनर्थकौ । हे देव वरुण विशो मनुष्याः विवेकशून्याः ते तव यद्व्रतं त्वामुद्दिश्य क्रियमाणं यथा लुम्पन्ति तथा वयमपि ते व्रतं द्यवि द्यवि दिने दिने प्रमिनीमसि हिंसितवन्तः । किंच यत्किंचेदं वरुणदैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ॥ हे वरुण यत्किञ्चिदिदं ईदृशं दैव्ये जने देवसमूहे मनुष्याः निकृष्टकर्माणो वयम् अभिद्रोहमपचारं चरामसि कृतवन्तः । अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ अचित्ती, प्रथमाबहुवचनस्य ईकारः, अचित्ताः अविवेकिनो वयं यद्यस्मात् तव धर्मा धर्मं युयोपिम विनाशितवन्तः । हे देव तस्मादेनसः पापात् नः अस्मान् मा रीरिषः मा हिंसीः । अस्माभिः कृतः सर्वोऽप्यपराधस्त्वयैव क्षन्तव्य इति भावः । किंच—कितवासो यद्रिरिपुर्न दीवि यद्वाघा सत्यमुत यन्न विद्म ॥ कितवासः कितवाः धूर्ताः यत् अस्मद्विषये पापमारोपयन्ति । न दीवि । नशब्द इवार्थे । दीवि देवनस्थान इव । यद्वाघेति पादपूरणार्थे एवकारार्थे वा वर्तते । सत्यं सत्यमेव । उत यन्न विद्म । उतेत्यप्यर्थे । यदपि वयं न विजानीमः । यथा कितवाः देवनस्थाने परस्परं सत्यमसत्यं च वदन्ति परस्परं दोषमप्यारोपयन्ति तद्वत् । सर्वा ता

विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः ॥
सर्वा ता सर्वाणि तानि हे देव शिथिरेव शिथिलानीव विष्य।-
पनय । अथानन्तरं हे वरुण ते तव प्रियासः प्रियाः स्याम ।
त्वया सकलपापविमोचने कृते शुद्धान्तःकरणाः सन्तस्तत्त्वम-
स्यादिमहावाक्योत्थब्रह्मात्मैकत्वज्ञानवन्तः स्याम । ज्ञानिनो हि
तवात्यन्तं प्रिया भवन्ति । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स
च मम प्रियः' इति श्रुतेः । एवं संध्यात्रयोपस्थानमन्त्रार्थः
क्रमेण कथितः ॥

इदानीं कालत्रयेऽप्युपस्थानानन्तरं कर्तव्यमुच्यते—
ओं संध्यायै नमः । सावित्र्यै नमः । गायत्र्यै नमः ।
सरस्वत्यै नमः इति प्रदक्षिणेन संध्यादीन्नत्वा, ओं
सर्वाभ्यो देवताभ्यो नमो नमः इति सर्वदेवताप्रणामं
कृत्वा, कामोऽकार्षीन्मन्युरकार्षीन्नमो नमः इत्युक्त्वा
देवीमभिवाद्य कर्णयुग्मं हस्ताभ्यां स्पृष्ट्वा जानुद्वयमारभ्य
चरणाङ्गुष्ठपर्यन्तं शनैः संमृज्यानन्तरं प्रदक्षिणक्रमेण प्राच्या-
दिकं नमस्कुर्यात् । प्राच्यै दिशे नमः । दक्षिणायै दिशे
नमः । प्रतीच्यै दिशे नमः । उदीच्यै दिशे नमः ।
ऊर्ध्वायै दिशे नमः । अधराय नमः । अन्तरिक्षाय
नमः । भूम्यै नमः । विष्णवे नमः । ब्रह्मणे नमः ।
यमाय नमः । एवं प्राच्यादिकं प्रणम्यानन्तरं दक्षिणा-
भिमुखः सन् 'यमाय धर्मराजाय' इत्यादिना धर्मराजं प्रण-



म्यानन्तरं पश्चिमाभिमुखः सन् 'ऋतं सत्यं परं ब्रह्म' इत्या-
दिना विरूपाक्षं प्रणम्यानन्तरमुत्तराभिमुखः सन् 'नर्मदायै
नमः प्रातः' इत्यादिना नर्मदां प्रणम्यानन्तरं प्राङ्मुखः सन्
'अपसर्प सर्प भद्रं ते' इत्यादिकमुक्त्वाऽदित्याभिमुखः सन्
'नमस्सवित्रे' इत्यारभ्य सवितृदेवनमस्कारं कृत्वा, केशवं
प्रतिगच्छतीत्यन्तेन सवितृमण्डलान्तरवस्थितं परमात्मानं
नारायणं प्रणम्याभिवाद्य 'कायेन वाचा' इत्यादिना 'नाराय-
णायेति समर्पयामि' इत्यन्तेन कर्म ब्रह्मार्पणं कृत्वा, द्विराचम्य
पित्रादीन् शिष्टानपि पार्श्वस्थान्नमस्कुर्यात् । तदाह भरद्वाजः—
'उपस्थाय नमस्कुर्याच्चतुस्संध्यादिदेवताः । संध्या पुरस्ता-
त्सावित्री गायत्री च सरस्वती ॥ एताः संध्यादयः प्रोक्ता-
श्चतस्रो देवताः क्रमात् । स्वस्वनामचतुर्थ्यन्तं प्रणवादिनमो-
न्तकम् ॥ मन्त्रमासामिह प्रोक्तं प्रणमेत्स्वस्वमन्त्रतः ॥
सर्वाभ्यो देवताभ्यश्चेत्येतत्प्रणवसंपुटम् । उक्त्वा नमो नम
इति प्रणमेत्सर्वदेवताः ॥ कामोऽकार्षीन्मन्युरकार्षीन्नमो नम
इत्यपि । उक्त्वा प्रदक्षिणेनैव देवीं विप्रोऽभिवादयेत् ॥
कर्णयुग्मं स्वहस्ताभ्यां स्पृष्ट्वा जानुद्वयादिकम् । चरणाङ्गु-
ष्ठपर्यन्तं संमृज्य तु शनैः शनैः ॥ अभिवाद्य च गायत्रीं
नमस्कुर्याद्दिशस्तथा । प्राची च दक्षिणा चैव प्रतीची
चोत्तरोर्ध्वगा ॥ अधरा चान्तरिक्षं च भूमिश्चाष्टोदिता
दिशः । एताः प्रदक्षिणेनैव प्रणमेत्स्वस्वमन्त्रतः ॥ यमवि-

ष्णुविरूपाक्षसवितॄणामुपस्थितिम् । कुर्यात्तल्लिङ्गकैर्मन्त्रैर्दिशो याम्यादिदिङ्मुखः । एवं संध्यामुपास्याथ पितरावग्रजान्गुरून् । त्रिवर्षपूर्वान् शिष्टांश्च पार्श्वस्थानभिवादयेत् ॥' इति । चन्द्रिकायामभिहितं—'आत्मपादौ तथा भूमिं संध्याकालेऽभिवादयेत् । आयुर्विद्या धनारोग्ये प्राप्नोति पुरुषः सदा ॥' इति । स्मृत्यर्थसारे त्वभिहितं—'जपस्थानान्न निर्गच्छेद्देवतासंनिधौ क्वचित् । प्रदक्षिणं नमस्कारं न कुर्याद्देवतालये ॥' इति ॥ जपकर्मसमाप्तिः ॥ अघोरमूर्तये नमः । हरिः ओम् ॥

इति श्रीमत्सज्जनवृन्दचरणारविन्दनिषेविवेदान्तिसीतारामशास्त्रिविरचितायामनुष्ठानप्रकाशिकायां पञ्चमोंऽशः समाप्तः ॥